पातञ्जल दर्शनम् — ~~of~~ the System of योग Philosophy by महर्षि कपिल (? — should be पतञ्जलि) with the commentary of व्यास and the gloss of वाचस्पति मिश्र — Edited by Pt. जीवानन्द विद्यासागर 3/e, Calcutta, 1940.



Philosophy

Bill No. 5/07-08

128

2008-0587

142

# Patanjala Darshana

OF

# The System of Yoga Philosophy

BY

## Maharshi Kapila

With the Commentary of Vyasa and the Gloss of

**VACHASPATI MISHRA**

*Edited and Published*

BY

*PANDIT JIBANANDA VIDYASAGARA, B.A.*

*Superintendent Free Sanskrit College.*

**THIRD EDITION.**



CALCUTTA.

PRINTED AT THE BACHASPATYA PRESS.

1940

To be had from Pandit Jibananda Vidyasagara, B.A.
FREE SANSKRIT COLLEGE.
2, Ramanath Majumdar Street, Calcutta.



# Patanjala Darshana

OF

# The System of Yoga Philosophy

BY

## Maharshi Kapila

With the Commentary of Vyasa and the Gloss of

VACHASPATI MISHRA

*Edited and Published*

BY

*PANDIT JIBANANDA VIDYASAGARA, B.A.*

*Superintendent Free Sanskrit College.*

THIRD EDITION.



CALCUTTA.

PRINTED AT THE BACHASPATYA PRESS.

1940

प्रकाशक— { पण्डित-श्रीआशुबोध-विद्याभूषण तथा पण्डित-श्रीनित्यबोध-विद्यारत्न ।

प्राप्तिस्थान— { २न०, रमानाथ मजुमदार ष्ट्रीट्, आम्हार्ष्ट ष्ट्रीट् पोष्ट-अफिस, कलिकाता ।

प्रिण्टर—बि, बि, मुखर्जी ।
२न०, रमानाथ मजुमदार ष्ट्रीट्, कलिकाता ।





# पातञ्जलदर्शनम् ।

## समाधिपादः ।

ओँ नमो गणेशाय ।

### अथ योगानुशासनम् ॥ १ ॥

यस्त्यक्त्वा रूपमाद्यं प्रभवति जगतोऽनेकधाऽनुग्रहाय
प्रक्षीणक्लेशराशिर्विषमविषधरोऽनेकवक्त्रः सुभोगी ।
सर्व्वज्ञानप्रसूतिर्भुजगपरिकरः प्रीतये यस्य नित्यं
देवोऽहीशः स वोऽव्यात् सितविमलतनुर्योगदो योगयुक्तः ॥ १ ॥

अथ इति अयमधिकारार्थः । योगानुशासनं शास्त्रमधिकृतं

---

नमामि जगदुत्पत्ति-हेतवे वृषकेतवे ।
क्लेशकर्मविपाकादिरहिताय हिताय च ॥
नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते ।
सङ्क्षिप्तस्पष्टबह्वर्था भाष्ये व्याख्या विधास्यते ॥

इह हि भगवान् पतञ्जलिः प्रारिप्सितस्य शास्त्रस्य सङ्क्षेपतः तात्पर्य्यार्थं व्याचिख्यासुरादाविदं सूत्रं रचयाञ्चकार, वत्प्रवृत्त्यङ्गं श्रोतुश्च सुखावबोधार्थम् अथ योगानुशासनम् । तत्र प्रथमावयवम् अथशब्दं व्याचष्टे । अथेत्ययमधिकारार्थ इति । अथैष ज्योतिरितिवत् न त्वानन्तर्य्यार्थः । अनुशासनमिति हि शास्त्रमाह अनुशिष्यतेऽनेनेति व्युत्पत्त्या. न चास्य शमदमाद्यनन्तरं प्रवृत्तिः, अपि तु तत्त्वज्ञानचिख्यापयिषानन्तरं जिज्ञासाज्ञानयोस्तु स्यात्; यथा आम्नायते "तस्मात् शान्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वा आत्मन्येव आत्मानं पश्येत्" इत्यादि शिष्यप्रश्नतपश्चरणरसायनाद्युपयोगानन्तर्य्यस्य च सम्भवेऽपि नाभिधानं शिष्यप्रतीतिप्रवृत्त्योरनुपयोगात्, प्रामाणिकत्वे योगानुशासनस्य तदभावेऽप्युपेयत्वात् अप्रामाणिकत्वे च तद्भावेऽपि हेयत्वात्; एतेन तत्त्वज्ञानचिख्यापयिषयोरानन्तर्य्यार्थाभिधानं परास्तम् ।

वेदितव्यम्। योगः समाधिः, स च सार्वभौमः चित्तस्य धर्मः। क्षिप्तं मूढं विक्षिप्तम् एकाग्रं निरुद्धम् इति चित्तभूमयः। तत्र विक्षिप्ते चेतसि विक्षेपोपसर्जनीभूतः समाधिर्न योगपक्षे वर्त्तते।

---

अधिकारार्थत्वे तु शास्त्रेण अधिक्रियमाणस्य योगस्याभिधानात् सकलशास्त्रतात्पर्य्यार्थ-व्याख्यानेन शिष्यः सुखेनैव बोधितश्च प्रवर्त्तितश्च भवतीति निःश्रेयसस्य हेतुः समाधिरिति हि श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धः।

ननु किं सर्व्वसन्दर्भगतोऽयशब्दोऽधिकारार्थः? तथा सति "अथातो ब्रह्म-जिज्ञासा" इत्यादावपि प्रसङ्गः? इत्यत आह—अथमिति। ननु "हिरण्यगर्भो योगस्य वक्ता नान्यः पुरातनः" इति योगियाज्ञवल्क्यस्मृतेः कथं पतञ्जलेः योगशास्त्रवक्तृत्वम्? इत्याशङ्क्य सूत्रकारेण उक्तम्, अनुशासनम् इति।—शिष्टस्य शासनमनुशासन-मित्यर्थः। यदाऽयमथशब्दोऽधिकारार्थः, तदैव वाक्यार्थः सम्पद्यते इत्याह—योगानुशासनं शास्त्रमधिकृतमिति। ननु व्युत्पाद्यमानतया योगोऽत्राधिकृतः, न तु शास्त्रम्? इत्यत आह, वेदितव्यम् इति।—सत्यं, व्युत्पाद्यमानतया योगः प्रस्तुतः, स तु तद्विषयेण शास्त्रेण करणेन व्युत्पाद्यः करणगोचरश्च, व्युत्पादकस्य व्यापारो न कर्मगोचर इति। कर्त्तृव्यापारविवक्षया योगविषयस्य शास्त्रस्य अधिकृतत्वं वेदितव्यं, शास्त्रव्यापारगोचरतया तु योग एवाधिकृत इति भावः। अधिकारार्थस्य च अथशब्दस्य अन्यार्थं नीयमानोद-कुम्भदर्शनमिव श्रवणं मङ्गलाय उपकल्पते इति मन्तव्यम्।

शब्दसन्देहनिमित्तमर्थसन्देहमपनयति, योगः समाधिः इति।—"युज समाधौ" इत्यस्मात् व्युत्पन्नः समाध्यर्थः, न तु "युजिर् योगे" इत्यस्मात् संयोगार्थः इत्यर्थः।

ननु समाधिरपि वक्ष्यमाणस्य अङ्गिनो योगस्य अङ्गं, न च अङ्गमेवाङ्गी? इत्यत आह—स च इति। चस्त्वर्थः। अङ्गात् अङ्गिनं भिनत्ति, सार्वभौमः भूमयोऽवस्था वक्ष्यमाणा मधुमती मधुप्रतीका विशोका संस्कारशेषाः, ताश्चित्तस्य, तासु सर्वासु विदितः सार्वभौमश्चित्तनिरोधलक्षणो योगः, तदङ्गन्तु समाधिर्नैवम्भूतः, व्युत्पत्ति-निमित्तमात्राभिधानं चैतत् योगः समाधिरिति अङ्गाङ्गिनोः अभेदविवक्षामात्रेण; निमित्तन्तु योगशब्दस्य चित्तवृत्तिनिरोध एवेति परमार्थः। वृत्तयो ज्ञानानि आत्माश्रयाणि, अतस्तन्निरोधोऽप्यात्माश्रय एवेति ये पश्यन्ति तन्निरासायाह, चित्तस्य धर्म इति।—चित्तशब्देन अन्तःकरणं बुद्धिमुपलक्षयति। न हि कूटस्थनित्या चितिशक्तिरपरिणामिनी ज्ञानधर्मा भवितुमर्हति, बुद्धिस्तु भवेदिति भावः।

स्यादेतत् सार्वभौमश्चेत् योगः, हन्त भोः! क्षिप्त-मूढ़ विक्षिप्ता अपि चित्तभूमयः,

यस्तु एकाग्रे चेतसि सद्भूतमर्थं प्रद्योतयति, क्षिणोति च क्लेशान्, कर्मबन्धनानि श्लथयति, निरोधमभिमुखं करोति, स सम्प्रज्ञातो योग इत्याख्यायते। स च वितर्कानुगतो विचारानुगतः

---

अस्ति च परस्परापेक्षया वृत्तिनिरोधोऽप्यास्विति तत्रापि योगप्रसङ्गः? इत्याशङ्क्य हेयोपादेयभूमीः उपन्यस्यति, क्षिप्तमित्यादि।—क्षिप्तं सदैव रजसा तेषु तेषु विषयेषु क्षिप्यमाणम् अत्यन्तमस्थिरम्। मूढन्तु तमःसमुद्रेकात् निद्रावृत्तिमत्, विक्षिप्तं क्षिप्ताद्विशिष्टं, विशेषोऽस्थेमबहुलस्य, कादाचित्कः स्थेमा, सा चास्य अस्थेमबहुलता सांसिद्धिकी वा वक्ष्यमाणव्याधिस्त्यानाद्यन्तरायजनिता वा। एकाग्रम् एकतानम्। निरुद्धसकलवृत्तिकं संस्कारमात्रशेषं चित्तं निरुद्धम्। तत्र क्षिप्त-मूढयोः सत्यपि परस्परापेक्षया वृत्तिनिरोधे पारम्पर्य्येणापि निःश्रेयस-हेतुभावाभावात् तदुपघातकत्वाच्च योगपक्षात् दूरतोत्सारितत्वमिति न तयोर्योगत्वं निषिद्धम्। विक्षिप्तस्य तु कादाचित्कसद्भूतविषयस्थेमशालिनः सम्भाव्येत योगत्वमिति निषेधति, तत्र इति।—विक्षिप्ते चेतसि समाधिः कादाचित्कः सद्भूतविषयस्य चित्तस्य स्थेमा न योगपक्षे वर्त्तते, कस्मात्? यतस्तद्विपक्षविक्षेपोप-सर्जनीभूतः, विपक्षवर्गान्तर्गतस्य हि स्वरूपमेव दुर्लभं प्रागेव कार्य्यकरणम्; न खलु दहनान्तर्गतं वीजं विचतुःक्षणावस्थितमुप्तमप्यङ्कुराय कल्पते इति भावः।

यदि विक्षेपोपसर्जनीभूतः समाधिर्न योगः, कस्तर्हि? इत्यत आह, यस्त्वेकाग्रे चेतसि इति।—भूतमिति समारोपितमर्थं निवर्त्तयति। निद्रावृत्तिरपि स्वालम्बने तमसि भूते भवति एकाग्रा, इत्यत उक्तं, सदिति शोभनं नितान्ताविर्भूतसत्त्वे, तमःसमुद्रेकस्तु अशोभनः, तस्य क्लेशहेतुत्वादिति। द्योतनं हि तत्त्वज्ञानमागमात् वा अनुमानाद्वा भवदपि परोक्षरूपतया न साक्षात्कारवतीम् अविद्यामुच्छिनत्ति, द्विचन्द्रदिङ्मोहादिषु अनुच्छेदकत्वादत आह, प्रेति।—प्रशब्दो हि प्रकर्षं द्योतयन् साक्षात्कारं सूचयति। अविद्यामूलत्वात् अस्मिताऽऽदीनां क्लेशानां, विद्यायाश्च अविद्योच्छेदरूपत्वात् विद्योदये च अविद्याक्लेशसमुच्छेदः विरोधित्वात् कारणविनाशाच्च इत्याह—क्षिणोति चेति। अत एव कर्मरूपाणि बन्धनानि श्लथयति। कर्म च अत्र अपूर्वमभिमतं कार्य्ये कारणोपचारात्। श्लथयति स्वकार्य्यात् अवसादयति। वक्ष्यति हि "सति मूले तद्विपाकः" इति। किञ्च निरोधमभि-मुखं करोति अभिमुखीकरोति। स च सम्प्रज्ञातश्चतुःप्रकार इत्याह—स चेति।

आनन्दानुगतः अस्मितानुगत इति उपरिष्टात् प्रवेदयिष्यामः । सर्ववृत्तिनिरोधे तु असम्प्रज्ञातः समाधिः ॥ १ ॥

तस्य लक्षणाभिधित्सया इदं सूत्रं प्रववृते—

Classify-वृत्ति. Narrate the dif. stages if there are in any of them

**योगश्चित्तवृत्तिनिरोधः ॥ २ ॥**

सर्वशब्दाग्रहणात् सम्प्रज्ञातोऽपि योग इति आख्यायते । चित्तं हि प्रख्या-प्रवृत्ति-स्थितिशीलत्वात् त्रिगुणम् । प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टम् ऐश्वर्य्यविषयप्रियं भवति ।

---

असम्प्रज्ञातमाह, सर्ववृत्तीति ।—रजस्तमोमयी किल प्रमाणादिवृत्तिः सात्त्विकीं वृत्तिमुपादाय सम्प्रज्ञाते निरुद्धा, असम्प्रज्ञाते तु सर्वासामेव निरोध इत्यर्थः । तदिह भूमिद्वये समाप्ता या मधुमत्यादयो भूमयः, ताः सर्वासामु विदितः सार्वभौम इति सिद्धम् ॥ १ ॥

द्वितीयं सूत्रमवतारयति, तस्य लक्षणेति ।—तस्य इति पूर्वसूत्रोपात्तं द्विविधं योगं परामृशति । योगश्चित्तवृत्तिनिरोधः,—निरुध्यन्ते यस्मिन् प्रमाणादिवृत्तयोऽवस्थाविशेषे चित्तस्य सोऽवस्थाविशेषो योगः ।

ननु सम्प्रज्ञातस्य योगस्य अव्यापकत्वात् अलक्षणमिदम्, अनिरुद्धा हि तत्र सात्त्विकी चित्तवृत्तिः ? इत्यत आह, सर्वशब्दाग्रहणादिति ।—यदि सर्वचित्तवृत्तिनिरोधो योग इत्युच्येत, भवेदव्यापकं सम्प्रज्ञातस्य क्लेशकर्मविपाकाशयपरिपन्थी, चित्तवृत्तिनिरोधस्तु तमपि सङ्गृह्णाति, तत्रापि राजस-तामसचित्तवृत्तिनिरोधात्, तस्य च तद्भावादित्यर्थः । कुतः पुनरेकस्य चित्तस्य क्षिप्तादिभूमिसम्बन्धः ? किमर्थं चैवमवस्थस्य चित्तस्य वृत्तयो निरोद्धव्याः ? इत्याशङ्क्य प्रथमं तावदवस्थासम्बन्धे हेतुमुपन्यस्यति, चित्तं हीति ।—प्रख्याशीलत्वात् सत्त्वगुणं, प्रवृत्तिशीलत्वात् रजोगुणं, स्थितिशीलत्वात् तमोगुणं, प्रख्याग्रहणमुपलक्षणार्थं, तेनान्येऽपि सात्त्विकाः प्रसादलाघव-प्रीत्यादयः सूच्यन्ते, प्रवृत्त्या च परिताप-शोकादयो राजसाः । प्रवृत्तिविरोधी तमोवृत्तिधर्मः स्थितिः । स्थितिग्रहणात् गौरवावरणदैन्यादयः उपलक्ष्यन्ते । एतदुक्तं भवति, एकमपि चित्तं त्रिगुणनिर्मिततया गुणानाञ्च वैषम्येण परस्परविमर्दवैचित्र्याद्विचित्रपरिणामं सत् अनेकावस्थमुपपद्यते इति ।

क्षिप्ताद्या एव चित्तस्य भूमीः यथासम्भवमवान्तरावस्थाभेदवतीः आदर्शयति, प्रख्यारूपं हि इति ।—चित्तरूपेण परिणतं सत्त्वं चित्तसत्त्वम्; तदेवं प्रख्यारूपतया

तदेव तमसा अनुविद्धमधर्माज्ञानावैराग्यानैश्वर्य्योपगं भवति। तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यैश्वर्य्योपगं भवति। तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यताख्यातिमात्रं धर्ममेघध्यानोपगं भवति। तत् परं प्रसङ्ख्यानमित्याचक्षते ध्यायिनः। चितिशक्तिरपरिणामिनी अप्रतिसङ्क्रमा दर्शित-

सत्त्वप्राधान्यं चित्तस्य दर्शितम्। तत्र चित्ते सत्त्वात् किञ्चिदूने रजस्तमसी यदा मिथः समे च भवतः, तदैश्वर्य्यञ्च विषयाश्च शब्दादयः तान्येव प्रियाणि यस्य तत्तथोक्तं, सत्त्वप्राधान्यात् खलु चित्तं तत्त्वे प्रणिधित्सदपि तत्त्वस्य तमसा पिहितत्वादणिमादिकमैश्वर्य्यमेव तत्त्वमभिमन्यमानं तत् प्रणिधित्सति, प्रणिधत्ते च क्षणम्, अथ रजसा क्षिप्यमाणं तत्रापि अलब्धस्थिति तत्प्रियमात्रं भवति। शब्दादिषु पुनरस्य स्वरसवाही प्रेमा निरूढ़ एव. तदनेन विक्षिप्तं चित्तमुक्तम्। क्षिप्तं चित्तं दर्शयन् मूढ़मपि सूचयति, तदेव तमसेति।—यदा हि तमो रजो विजित्य प्रवृत्तं, तदा चित्तसत्त्वावरकतमःसमुत्सारणे अशक्तत्वात् रजस्तमःस्थगितं चित्तमधर्माद्युपगच्छति। अज्ञानञ्च विपर्य्ययज्ञानम्, अभावप्रत्ययालम्बनञ्च निद्राऽज्ञानमुक्तम्; ततश्च मूढ़ावस्थाऽपि सूचितेति। अनैश्वर्य्यं सर्वत्र इच्छाप्रतीघातः, अधर्मादिव्याप्तं चित्तं भवतीत्यर्थः। यदा तु तदेव चित्तसत्त्वमाविर्भूतसत्त्वमपगततमःपटलं सरजस्कं भवति, तदा धर्मज्ञानवैराग्यैश्वर्य्याणि उपगच्छतीत्याह, प्रक्षीणेत्यादि।—मोहः तमस्तदेव चावरणं प्रकर्षेण क्षीणं यस्य तत्तथोक्तम्। अत एव सर्वतो विशेषाविशेषलिङ्गमात्रालिङ्गपुरुषेषु प्रद्योतमानम्। तथाऽपि न धर्मार्थैश्वर्य्याय च कल्पते प्रवृत्त्यभावादित्यत आह, अनुविद्धं रजोमात्रया इति।—रजसः प्रवर्त्तकत्वादस्ति धर्मादिरित्यर्थः। तदनेन सम्प्रज्ञातसमाधिसम्पन्नयोः मधुभूमिकप्रज्ञाज्योतिषोर्मध्यमयोर्योगिनोश्चित्तसत्त्वं सङ्गृहीतम्। सम्प्रति अतिक्रान्तभावनीयस्य ध्यायिनश्चतुर्थस्य चित्तावस्थामाह, तदेव इति।—चित्तं रजोलेशान्मलादपेतम्, अत एव स्वरूपप्रतिष्ठम्। अभ्यासवैराग्यपुटपाकप्रबन्धविधूतरजस्तमोमलस्य हि बुद्धिसत्त्वतपनीयस्य स्वरूपप्रतिष्ठायां विषयेन्द्रियप्रत्याहृतस्य अनवसिताधिकारतया च कार्य्यकारिणी विवेकख्यातिः परं कार्य्यमवशिष्यते इत्याह, सत्त्वेति।—सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघध्यानोपगं भवति। धर्ममेघश्च वक्ष्यते।

अत्रैव योगिजनप्रसिद्धिमाह. तत् परमिति।—सत्त्वपुरुषान्यताख्यातिमात्रं चित्तं धर्ममेघपर्य्यन्तं परं प्रसङ्ख्यानमिति आचक्षते ध्यायिनः। चित्तसामानाधिकरण्ये च

विषया शुद्धा चानन्ता च, सत्त्वगुणात्मिका चेयम्, अतो विपरीता विवेकख्यातिरिति। अतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि, तदवस्थं चित्तं संस्कारोपगं भवति, स निर्वीजः समाधिः, न तत्र किञ्चित् सम्प्रज्ञायते इति असम्प्रज्ञातः, द्विविधः स योगः चित्तवृत्तिनिरोध इति ॥ २ ॥

---

धर्म-धर्मिणोरभेदविवचया द्रष्टव्यम् । विवेकख्यातेर्हानहेतुं चितिशक्तेश्च उपादानहेतुं निरोधसमाधिमवतारयितुं चितिशक्तेः साधुतामसाधुताञ्च विवेकख्यातेर्दर्शयति, चितिशक्तिरित्यादिना ।—सुखदुःखमोहात्मकत्वमशुद्धिः, सुखमोहावपि हि विवेकिनं दुःखाकुरुतः, अतो दुःखवद्धेयौ ; तथा च, अतिसुन्दरमप्यन्नवत् दुनोति, तेन तदपि हेयमेव विवेकिनः, सेयमशुद्धिरन्तश्च चितिशक्तौ पुरुषे न स इत्यत उक्तं—शुद्धा चानन्ता चेति । ननु सुखदुःखमोहात्मकशब्दादीन् इयं चेतयमाना तदाकारापन्ना कथं विशुद्धा ? तदाकारपरिग्रहपरिवर्जने च कुर्वती कथमनन्ता ? इत्यत उक्तं, दर्शितविषयेति ।—दर्शितो विषयः शब्दादिः यस्यै सा तथोक्ता । भवेदेतदेवं, यदि बुद्धिवत् चितिशक्तिर्विषयाकारतामापद्येत, किन्तु बुद्धिरेव विषयाकारेण परिणता सती अतदाकारायै चितिशक्त्यै विषयमादर्शयति, ततः पुरुषश्चेतयते इति उच्यते । ननु विषयाकारां बुद्धिमनारूढायाः चितिशक्तेः कथं विषयवेदनम् ? विषयारोहे वा कथं न तदाकारापत्तिः इति ? अतः उक्तम्, अप्रतिसङ्क्रमेति ।—प्रतिसङ्क्रमः सञ्चारः, स चितेर्नास्तीत्यर्थः । स एव कुतोऽस्या नास्ति ? इत्यत उक्तम्, अपरिणामिनीति ।—न चितेस्त्रिविधोऽपि धर्मलक्षणावस्थालक्षणः परिणामोऽस्ति, येन क्रियारूपेण परिणता सती बुद्धिसंयोगेन परिणमेत चितिशक्तिः । असङ्क्रान्ताया अपि विषयसंवेदनमुपपादयिष्यते । तत् सिद्धं चितिशक्तिः शोभनेति ; विवेकख्यातिस्तु बुद्धिसत्त्वात्मिका अशोभनेत्युक्तम् । अतश्चितिशक्तेर्विपरीतेति, यदा विवेकख्यातिरपि हेया, तदा कैव कथा वृत्त्यन्तराणां दोषबहुलानाम् ? इति भावः । ततश्चेतोनिरोधसमाधेरवतारो युज्यते इत्याह, अतस्तस्यामिति ।—ज्ञानप्रसादमात्रेण हि परेण वैराग्येण विवेकख्यातिमपि निरुणद्धीत्यर्थः ।

अथ अनिरुद्धाशेषवृत्ति चित्तं कीदृशम् ? इत्यत आह, तदवस्थमित्यादि ।—स निरोधोऽवस्था यस्य तत्तथोक्तम् । निरोधस्य स्वरूपमाह, स निर्वीज इति ।—क्लेशसहितः कर्माशयो जात्यायुर्भोगवीजं, तस्मान्निर्गत इति निर्वीजः । अस्यैव योगिजनप्रसिद्धामन्वर्थां संज्ञामादर्शयति—न तत्रेति । उपसंहरति—द्विविधः स योगश्चित्तवृत्तिनिरोध इति ॥ २ ॥

तदवस्थे चेतसि विषयाभावात् बुद्धिबोधात्मा पुरुषः किं-स्वभावः ? इति—

**तदा द्रष्टुः स्वरूपेऽवस्थानम् ॥ ३ ॥**

स्वरूपप्रतिष्ठा तदानीं चितिशक्तिर्यथा कैवल्ये, व्युत्थान-चित्ते तु सति तथाऽपि भवन्ती न तथा।

कथं तर्हि ? दर्शितविषयत्वात्—

---

सम्प्रति उत्तरसूत्रमवतारयंश्चोदयति, तदवस्थे चेतसीति।—किमाक्षेपे ; तत्तदा-कारपरिणतबुद्धिबोधात्मा खलु अयं पुरुषः सदा अनुभूयते, न बुद्धिबोधरहितः, अतोऽस्य पुरुषस्य बुद्धिबोधस्वभावः सवितुरिव प्रकाशः, न च संस्कारशेषे चेतसि सोऽस्ति, न च स्वभावमपहाय भावो वर्त्तितुमर्हति इति भावः। स्यादेतत्, संस्कार-शेषामपि बुद्धिं कस्मात् पुरुषो न बुध्यते ? इत्यत आह, विषयाभावादिति।—न बुद्धिमात्रं पुरुषस्य विषयः, अपि तु पुरुषार्थवती बुद्धिः, विवेकख्याति-विषयभोगौ च पुरुषार्थौ, तौ च निरुद्धावस्थायां न स्त इति सिद्धो विषयाभावः। सूत्रेण परिहरति, तदा द्रष्टुः स्वरूपेऽवस्थानम्। स्वरूपे इत्यारोपितं शान्तघोरमूढ़-स्वरूपं निवर्त्तयति। पुरुषस्य हि चैतन्यं स्वरूपमनौपाधिकं, न तु बुद्धिबोधः शान्तादिरूपः, औपाधिकः हि सः ; स्फटिकस्येव स्वभावस्वच्छधवलस्य जपाकुसुम-सन्निधानोपाधिः अरुणिमा, न चोपाधिनिवृत्तावुपहितनिवृत्तिः, अतिप्रसङ्गादिति भावः। स्वरूपस्य च अभेदेऽपि भेदं विकल्प्य अधिकरणभाव उक्त इति। अय-मेवार्थो भाष्यकृता द्योत्यते—स्वरूपप्रतिष्ठेति। तदानीं निरोधावस्थायां, न व्युत्थानावस्थायामिति भावः। स्यादेतत् व्युत्थानावस्थायाम् अप्रतिष्ठिता स्वरूपे चितिशक्तिः निरोधावस्थायां प्रतितिष्ठन्ती परिणामिनी स्यात् व्युत्थाने वा, स्वरूप-प्रतिष्ठाने सति व्युत्थान-निरोधयोः अविशेष इत्यत आह, व्युत्थानचित्ते त्विति।—न जातु कूटस्थनित्या चितिशक्तिः स्वरूपात् च्यवते। तेन यथा निरोधे, तथैव व्युत्थानेऽपि न खलु शुक्तिकायाः प्रमाणविपर्ययज्ञानगोचरत्वेऽपि स्वरूपोदय-व्ययौ भवतः, प्रतिपत्तौ तु तथाभूतमपि अतथात्वेन अभिमन्यते। निरोधसमाधि-मपेक्ष्य सम्प्रज्ञातोऽपि व्युत्थानमेवेति ॥ ३ ॥

सूत्रान्तरमवतारयितुं पृच्छति, कथन्तर्हि ? इति।—यदि तथाऽपि भवन्ती न तथा, केन तर्हि प्रकारेण प्रकाशते ? इत्यर्थः। हेतुपदमभ्याहृत्य सूत्रं पठति,

**वृत्तिसारूप्यमितरत्र ॥ ४ ॥**

व्युत्थाने याः चित्तवृत्तयः तदविशिष्टवृत्तिः पुरुषः। तथा च सूत्रम् "एकमेव दर्शनं ख्यातिरेव दर्शनम्" इति। चित्तम् अयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन स्वं भवति पुरुषस्य स्वामिनः; तस्मात् चित्तवृत्तिबोधे पुरुषस्य अनादिसम्बन्धो हेतुः ॥ ४ ॥

---

दर्शितविषयत्वात् वृत्तिसारूप्यमितरत्र।—इतरत्र—व्युत्थाने याश्चित्तवृत्तयः शान्तघोरमूढ़ाः, ता एव अविशिष्टा अभिन्ना वृत्तयो यस्य पुरुषस्य स तथोक्तः। सारूप्यमित्यत्र स शब्दः एकपर्य्यायः। एतदुक्तं भवति—जपाकुसुम-स्फटिकयोरिव बुद्धिपुरुषयोः सन्निधानादभेदग्रहे बुद्धिवृत्तीः पुरुषे समारोप्य शान्तोऽस्मि दुःखितोऽस्मि मूढ़ोऽस्मीति अध्यवस्यति। यथा मलिने दर्पणतले प्रतिविम्बितं मुखं मलिनमारोप्य शोचति आत्मानं मलिनोऽस्मीति। यद्यपि पुरुषसमारोपोऽपि शब्दादिविज्ञानवत् बुद्धिवृत्तिः, यद्यपि च प्राकृतत्वेन अचिद्रूपतया अनुभाव्यः, तथाऽपि बुद्धेः पुरुषत्वमापादयन् पुरुषवृत्तिरिवानुभव इव अवभासते; तथा च, अयमविपर्य्ययोऽप्यात्मा विपर्य्ययवानिव, अभोक्ताऽपि भोक्तेव, विवेकख्यातिरहितोऽपि तत्सहित इव अविवेकख्यात्यां प्रकाशते। एतच्च चितेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनमित्यत्र सत्त्वपुरुषयोः अत्यन्तासङ्कीर्णयोः प्रत्ययाविशेषो भोग इत्यत्र च उपपादयिष्यते। एतच्च मतान्तरेऽपि सिद्धमित्याह, तथा चेति।—पञ्चशिखाचार्य्यस्य सूत्रम्—"एकमेव दर्शनं ख्यातिरेव दर्शनम्" इति।

ननु कथमेकं दर्शनम्? यावता बुद्धेः शब्दादिविषया विवेकविषया च वृत्तिः प्राकृततया जड़त्वेन अनुभाव्या, दर्शनं ततोऽन्यत्, पुरुषस्य चैतन्यम् अनुभवो दर्शनम्? इत्यत आह, ख्यातिरेव दर्शनमिति।—उदयव्ययधर्मिणीं वृत्तिं ख्यातिं लौकिकीम् अभिप्रेत्य एतदुक्तम् एकमेवेति, चैतन्यन्तु पुरुषस्य स्वभावः, न ख्यातिः। चैतन्यं न लोकप्रत्यक्षगोचरम्, अपि तु आगमानुमानगोचरम् इत्यर्थः। तदनेन व्युत्थानावस्थायां मूलकारणमविद्यां दर्शयता तद्धेतुकः संयोगो भोगहेतुः स्वस्वामिभावोऽपि सूचित इति। तमुपपादयन्नाह, चित्तम् इति।—चित्तं स्वं भवति पुरुषस्य स्वामिन इति सम्बन्धः। ननु चित्तजनितमुपकारं भजमानो हि चेतनश्चित्तस्येशिता, न चास्य तज्जनितोपकारसम्भवः, तदसम्बन्धादनुपकार्य्यत्वात् तत्संयोग-तदुपकारभागित्वे च परि-

ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य—

**वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः ॥ ५ ॥**

क्लेशहेतुकाः कर्माशयप्रचयक्षेत्रीभूताः क्लिष्टाः। ख्याति-

---

स्वामित्वप्रसङ्गात्? इत्यत आह, अयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेनेति।— न पुरुषसंयुक्तं चित्तम्, अपि तु तत्सन्निहितं, सन्निधिश्च पुरुषस्य न देशतः कालतो वा, तदसंयोगात्, किन्तु योग्यतालक्षणः। अस्ति च पुरुषस्य भोक्तृशक्तिश्चित्तस्य भोग्यशक्तिः, तदुक्तं, दृश्यत्वेनेति।—शब्दाद्याकारपरिणतस्य भोग्यत्वेनेत्यर्थः। भोगश्च यद्यपि शब्दाद्याकारा वृत्तिश्चित्तस्य धर्मः, तथापि चित्त-चैतन्ययोरभेदसमारोपादृत्तिसारूप्यात् पुरुषस्येत्युक्तम्; तस्माच्चित्तेनासंयोगेऽपि तज्जनितोपकारभागिता पुरुषस्य अपरिणामिता चेति सिद्धम्। ननु स्वस्वामिसम्बन्धो भोगहेतुरविद्यानिमित्तः, अविद्या तु किन्निमित्ता? न खलु निर्निमित्तं कार्य्यमुत्पद्यते, यथाहुः,— "स्वप्नादिवदविद्यायाः प्रवृत्तिः तस्य किं कृता" इति शङ्कामुपसंहारव्याजेन उद्धरति, तस्मात् चित्तवृत्तिबोधे इति।—शान्तघोरमूढाकारचित्तवृत्त्युपभोगे अनाद्यविद्यानिमित्तत्वादनादिसंयोगो हेतुः। अविद्या-वासनयोश्च सन्तानो बीजाङ्कुरसन्तानवदनादिरिति भावः॥ ४॥

स्यादेतत्, पुरुषो हि शक्ये उपदिश्यते, न च वृत्तिनिरोधो वृत्तीरविज्ञाय शक्यः, न च सहस्रेणापि पुरुषायुषैः अलमिमाः कश्चित् परिगणयितुम्, असङ्ख्याताश्च कथं निरोद्धव्याः? इत्याशङ्क्य तासामियत्तास्वरूपप्रतिपादनपरं सूत्रमवतारयति— ताः पुनर्निरोद्धव्या बहुत्वे सति चित्तस्य इति। वृत्तयः पञ्चतय्यः क्लिष्टा अक्लिष्टाः,— वृत्तिरूपोऽवयवी एकः, तस्य प्रमाणादयोऽवयवाः पञ्च, ततस्तदवयवा पञ्चतयी पञ्चावयवा वृत्तिर्भवति, ताश्च वृत्तयश्चैत्रमैत्रादिचित्तभेदात् बह्व्य इति बहुवचनम् उपपन्नम्। एतदुक्तं भवति—चैत्रो वा मैत्रो वा अन्यो वा कश्चित् सर्वेषामेव तेषां वृत्तयः पञ्चतय्यः एव नाधिका इति। चित्तस्येति चैकवचनं जात्यभिप्रायं, चित्तानामिति तु द्रष्टव्यम्। तासामवान्तरविशेषम् अनुष्ठानोपयोगिनं दर्शयति, क्लिष्टा अक्लिष्टा इति।—अक्लिष्टा उपादेयाः, क्लिष्टा निरोद्धव्याः, ता अपि परेण वैराग्येणेति। अस्य व्याख्यानम् आह, क्लेशहेतुका इति।—क्लेशा अस्मितादयो हेतवः प्रवृत्तिकारणं यासां वृत्तीनां तास्तथोक्ताः। यद्वा—पुरुषार्थप्रधानस्य रजस्तमोमयीनां हि वृत्तीनां क्लेशकारित्वेन क्लेशायैव प्रवृत्तिः। क्लेशः क्लिष्टं, तदासामस्तीति क्लिष्टा इति। यत एव क्लेशोपार्जनार्थममूषां प्रवृत्तिः, अत एव कर्माशयप्रचयक्षेत्री-

विषया गुणाधिकारविरोधिन्योऽक्लिष्टाः। क्लिष्टप्रवाहपतिता अपि अक्लिष्टाः, क्लिष्टच्छिद्रेषु अपि अक्लिष्टा भवन्ति, अक्लिष्टच्छिद्रेषु क्लिष्टा इति। तथा जातीयकाः संस्काराः वृत्तिभिरेव क्रियन्ते, संस्कारैश्च वृत्तय इति, एवं वृत्ति-संस्कारचक्रम् अनिशमावर्त्तते, तदेवम्भूतं चित्तमवसिताधिकारमात्मकल्पेन व्यवतिष्ठते, प्रलयं वा गच्छति इति॥ ५॥

ताः क्लिष्टाश्च अक्लिष्टाश्च पञ्चधा वृत्तयः,—

**प्रमाण-विपर्य्यय-विकल्प-निद्रा-स्मृतयः॥६॥**

---

भूताः; प्रमाणादिना खलु अयं प्रतिपत्ता अर्थमवसाय तत्र सक्तो द्विष्टो वा कर्माशयमाचिनोतीति भवन्ति धर्माधर्मप्रसवभूमयो वृत्तयः क्लिष्टा इति। अक्लिष्टा व्याचष्टे, ख्यातिविषया इति।—विधूतरजस्तमसो बुद्धिसत्त्वस्य प्रशान्तवाहिनः प्रज्ञाप्रसादः ख्यातिः, तया विषयिण्या तद्विषयं सत्त्वपुरुषविवेकमुपलक्षयति, तेन सत्त्वपुरुषविवेकविषया यतः, अत एव गुणाधिकारविरोधिन्यः, कार्य्यारम्भणं हि गुणानामधिकारः, विवेकख्यातिपर्य्यवसानञ्च तदिति चरिताधिकाराणां गुणानामधिकारं निरुन्धन्ति इति, अतस्ता अक्लिष्टाः प्रमाणप्रभृतयो वृत्तयः।

स्यादेतत् वीतरागजन्मादर्शनात् क्लिष्टवृत्तय एव सर्वे प्राणभृतः, न च क्लिष्टवृत्तिप्रवाहे भवितुमर्हन्ति अक्लिष्टा वृत्तयः, न चामूषां भावेऽपि कार्य्यकारिता, विरोधिमध्यपातित्वात्; तस्मात् क्लिष्टानामक्लिष्टाभिर्निरोधः, तासाञ्च वैराग्येण परेणेति मनोरथमात्रम्? इत्यत आह, क्लिष्टप्रवाहेति।—आगमानुमानाचार्य्योपदेशपरिशीलनलब्धजन्मनी अभ्यास-वैराग्ये क्लिष्टच्छिद्रम् अन्तरं, तत्र पतिताः स्वयमक्लिष्टा एव यद्यपि क्लिष्टप्रवाहपतिताः, न खलु शालग्रामे किरातशतसङ्कीर्णे प्रतिवसन्नपि ब्राह्मणः किरातो भवति। अक्लिष्टच्छिद्रेष्विति निदर्शनम्। क्लिष्टान्तर्वर्त्तितया च क्लिष्टाभिरनभिभूता अक्लिष्टाः स्वसंस्कारपरिपाकक्रमेण क्लिष्टा एव तावदभिभवन्तीत्याह, तथा जातीयका इति।—अक्लिष्टाभिर्वृत्तिभिरक्लिष्टाः संस्कारा इत्यर्थः। तदिदं वृत्ति-संस्कारचक्रम् अनिशम् आवर्त्तते आ-निरोधसमाधेः, तदेवम्भूतं चित्तं निरोधावस्थं संस्कारशेषं भूत्वा आत्मकल्पेन व्यवतिष्ठते इति, आपाततः प्रलयं वा गच्छतीति॥ ५॥

परमार्थतः पिण्डीकृत्य सूत्रार्थमाह, ता इति।—पञ्चधेत्यर्थकथनमात्रं, न तु शब्दप्रवृत्तिव्याख्यानं, तयपः (?) प्रकारेऽस्मरणात्।

तत्र—

**प्रत्यक्षानुमानागमाः प्रमाणानि ॥७॥**

इन्द्रियप्रणालिकया चित्तस्य वाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम्। फलमविशिष्टः पौरुषेयश्चित्तवृत्तिबोधः, बुद्धेः प्रतिसंवेदी पुरुष इति उपरिष्टात् उपपादयिष्यामः। अनुमेयस्य

---

ताः स्वसंज्ञाभिरुद्दिशति, प्रमाणविपर्ययविकल्पनिद्रास्मृतयः।—निर्देशे यथा वचनं विग्रहः, चार्थे द्वन्द्वः समासः इतरेतरयोगः। यथा "अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या" इत्युक्तेऽपि न दिङ्मोहालातचक्रादिविभ्रमा व्युदस्यन्ते, एवमिहापि प्रमाणाद्यभिधानेऽपि वृत्त्यन्तरसद्भावशङ्का न व्युदस्येतेति तन्निरासाय वक्तव्यं पञ्चतय्य इति।—एतावत्य एव वृत्तयः, न अपराः सन्तीति दर्शितं भवति ॥ ६ ॥

तत्र प्रमाणवृत्तिं विभजन् सामान्यलक्षणमाह, प्रत्यक्षानुमानागमाः प्रमाणानि।—अनधिगततत्त्वबोधः पौरुषेयो व्यवहारहेतुः प्रमा, तत्करणं प्रमाणम्। विभागवचनं न्यूनाधिकसङ्ख्याव्यवच्छेदार्थम्। तत्र सकलप्रमाणमूलत्वात् प्रथमतः प्रत्यक्षं लक्षयति—इन्द्रियेति। अर्थस्येति समारोपितत्वं निषेधयति। तद्विषयेति वाह्यगोचरतया ज्ञानाकारगोचरत्वं वारयति। चित्तवर्त्तिनो ज्ञानाकारस्य वाह्यज्ञेयसम्बन्धं दर्शयति—वाह्यवस्तूपरागादिति। व्यवहितस्य तदुपरागे हेतुमाह—इन्द्रियप्रणालिकयेति। सामान्यमात्रमर्थ इत्येके, विशेषा एव इत्यन्ये, सामान्यविशेषतद्वन्त इत्यपरे वादिनः प्रतिपन्नाः, तन्निरासायाह, सामान्यविशेषात्मन इति।—न तद्वत्ता, किन्तु तादात्म्यमर्थस्य; एतच्च एकान्तानभ्युपगमात् इत्यत्र प्रतिपादयिष्यते। अनुमानागमविषयात् प्रत्यक्षविषयं व्यवच्छिनत्ति, विशेषावधारणप्रधानेति।—यद्यपि सामान्यमपि प्रत्यक्षे प्रतिभासते, तथाऽपि विशेषं प्रत्युपसर्जनीभूतम् इत्यर्थः। एतच्च साक्षात्कारोपलक्षणपरम्; तथा च, विवेकख्यातिरपि लक्षिता भवति। फलविप्रतिपत्तिं निराकरोति—फलं पौरुषेयश्चित्तवृत्तिबोध इति। ननु पुरुषवर्त्ती बोधः कथं चित्तगताया वृत्तेः फलं, न हि खदिरगोचरव्यापारेण परशुना पलाशे छिदा क्रियते? इत्यत आह, अविशिष्ट इति।—न हि पुरुषगतो बोधो जन्यते, अपि तु चैतन्यमेव बुद्धिदर्पणप्रतिविम्बितं बुद्धिवृत्त्या अर्थाकारया तदाकारताम् आपद्यमानं फलम्। तच्च तथाभूतं बुद्धेरविशिष्टं बुद्ध्यात्मकं, वृत्तिश्च बुद्ध्यात्मिकेति सामानाधिकरण्यात् युक्तः प्रमाणफलभाव इत्यर्थः। एतच्च उपपादयिष्याम

तुल्यजातीयेषु अनुवृत्तो भिन्नजातीयेभ्यो व्यावृत्तः सम्बन्धो यः तद्विषया सामान्याऽवधारणप्रधाना वृत्तिः अनुमानम्। यथा देशान्तरप्राप्तेर्गतिमच्चन्द्रतारकं चैत्रवत् विन्ध्यश्चाप्राप्तिरगतिः। आप्तेन दृष्टोऽनुमितो वा अर्थः परत्र स्वबोधसङ्क्रान्तये शब्देन उपदिश्यते, शब्दात् तदर्थविषया वृत्तिः श्रोतुरागमः, यस्यागमस्य अश्रद्धेयार्थो वक्ता न दृष्टानुमितार्थः, स आगमः प्लवते। मूलवक्तरि तु दृष्टानुमितार्थे निर्विप्लवः स्यात्॥ ७॥

---

इत्याह—बुद्धेः प्रतिसंवेदीति। प्रत्यक्षानन्तरं प्रवृत्त्यादिलिङ्गकश्रोतृबुद्ध्यनुमानप्रभवसम्बन्ध-दर्शनसमुत्थतया आगमस्यानुमानजन्यत्वादनुमितस्य च आगमेन अन्वाख्यानादागमात् प्रागनुमानं लक्षयति—अनुमेयस्येति। जिज्ञासितधर्मविशिष्टो धर्म्यनुमेयः, तस्य तुल्यजातीयाः साध्यधर्मसामान्येन समानार्थाः सपक्षाः, तेषु अनुवृत्त इत्यनेन विरुद्ध-त्वम् असाधारणधर्मत्वञ्च साधनधर्मस्य निराकरोति। भिन्नजातीया असपक्षाः, ते च सपक्षादन्ये तद्विरुद्धास्तदभाववन्तश्च, तेभ्यो व्यावृत्तः, तदनेन साधारणानैकान्तिकत्व-मपाकरोति—सम्बध्यते इति सम्बन्धो लिङ्गम्। अनेन पक्षधर्मतां दर्शयन् असिद्धतां निवारयति—तद्विषया तन्निबन्धना, "षिञ् बन्धने" इत्यस्माद्विषयपदव्युत्पत्तेः; सामान्याव-धारणेति प्रत्यक्षविषयात् व्यवच्छिनत्ति। सम्बन्धसंवेदनाधीनजन्मानुमानं विशेषेषु सम्बन्धग्रहणाभावेन सामान्यमेव सुकरसम्बन्धग्रहणं गोचरयतीति। उदाहरणमाह, यथेति।—चौ हेत्वर्थे; विन्ध्योऽगतिर्यतस्तस्मात् तस्याप्राप्तिः, अतो गतिनिवृत्तौ प्राप्तेः निवृत्तेः देशान्तरप्राप्तेः गतिमच्चन्द्रतारकं चैत्रवदिति सिद्धम्। आगमस्य वृत्ते-र्लक्षणमाह, आप्तेनेति।—तत्त्वदर्शनकारुण्यकरणपाटवाभिसम्बन्धः आप्तिः, तया वर्त्तते इति आप्तः, तेन दृष्टः अनुमितो वा अर्थः। श्रुतस्य पृथगनुपादानं, तस्य दृष्टानुमित-मूलत्वेन ताभ्यामेव चरितार्थत्वात्, आप्तचित्तवर्त्तिज्ञानसदृशस्य ज्ञानस्य श्रोतृचित्ते समुत्पादः स्वबोधसङ्क्रान्तिः तस्मै अर्थे उपदिश्यते श्रोतृहिताहितप्राप्तिपरिहारोपायतया प्रज्ञाप्यते। शेषं सुगमम्। यस्य आगमस्य अश्रद्धेयार्थो वक्ता, यथा यान्येव दश दाडिमानि तान्येव षड़पूपा भविष्यन्ति इति, न दृष्टानुमितार्थः. यथा चैत्यं वन्देत् स्वर्गकाम इति स आगमः प्लवते। नन्वेवं मन्वादीनामपि आगमः प्लवेत ? न हि तेऽपि दृष्टानु-मितार्थाः ? इत्यत आह, मूलवक्तरि तु इति।—मूलवक्ता हि तत्रेश्वरो दृष्टानुमितार्थः, यथाऽऽहुः,—"यः कश्चित् कस्यचिद्धर्मो मनुना परिकीर्त्तितः। स सर्वोऽभिहितो वेदे सर्वज्ञानमयो हि सः॥" इति इत्यर्थः॥ ७॥

**विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम् ॥ ८ ॥**

स कस्मान्न प्रमाणम्? यतः प्रमाणेन बाध्यते, भूतार्थविषयत्वात् प्रमाणस्य। तत्र प्रमाणेन बाधनमप्रमाणस्य दृष्टम्। तत् यथा द्विचन्द्रदर्शनं सद्विषयेण एकचन्द्रदर्शनेन बाध्यते इति। सेयं पञ्चपर्वा भवति अविद्या, अविद्याऽस्मिता-राग-द्वेषाभिनिवेशाः क्लेशा इति, अत एव स्वसंज्ञाभिस्तमो मोहो महामोहस्तामिस्र अन्धतामिस्र इति, एते चित्तमलप्रसङ्गेन अभिधास्यन्ते ॥८॥

---

विपर्य्ययो मिथ्याज्ञानमतद्रूपप्रतिष्ठम्। विपर्य्यय इति लक्ष्यनिर्देशः, मिथ्याज्ञानमित्यादि लक्षणं, यत् ज्ञानप्रतिभासि रूपं तद्रूपाप्रतिष्ठमेवातद्रूपप्रतिष्ठं, यथा अश्वाद्भोजोति। अतः संशयोऽपि सङ्गृहीतः। एतावांस्तु विशेषः, तत्र ज्ञानारूढैव अप्रतिष्ठिता, द्विचन्द्रादेस्तु बाधज्ञानेन। नन्वेवं विकल्पोऽपि तद्रूपाप्रतिष्ठानाद्विचारतो विपर्य्ययः प्रसज्येतेत्यत आह—मिथ्याज्ञानमिति। अनेन हि सर्वजनीनानुभवसिद्धो बाध उक्तः, स चास्ति विपर्य्यये न तु विकल्पे, तेन व्यवहारात् पण्डितरूपाणामेव तु विचारयतां तत्र बाधबुद्धेरिति। चोदयति, स कस्मात् न प्रमाणम्? इति।—न उत्तरेण उपजातविरोधिना ज्ञानेन पूर्वं बाधनीयम्, अपि तु पूर्वेणैव प्रथममुपजातेनानुपजातविरोधिना परमिति भावः। परिहरति, यतः प्रमाणेनेति।—यत्र हि पूर्वापेक्षा परोत्पत्तिः तत्र एवम्, इह तु स्वस्वकारणादन्योऽन्यानपेक्षे ज्ञाने जायेते, तेनोत्तरस्य पूर्वमनुपमृद्य उदयमनासादयतस्तदपबाधात्मैवोदयः, न तु पूर्वस्योत्तरबाधात्मोदयः, तस्य तदानीमप्रसक्तेः, तस्मादनुपजातविरोधिता बाध्यत्वे हेतुः उपजातविरोधिता च बाधकत्वे, तस्माद्भूतार्थविषयत्वात् प्रमाणेन अप्रमाणस्य बाधनं सिद्धम्।

उदाहरणमाह—तत्र प्रमाणेन इति। तस्य कुत्सितत्वं हानाय दर्शयति, सेयं पञ्चेति।—अविद्यासामान्यमविद्याऽस्मितादिषु पञ्चसु पर्वसु इत्यर्थः। अव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु अष्टसु अनात्मस्वात्मबुद्धिः अविद्या तमः। एवं योगिनामष्टसु अणिमादिकेषु ऐश्वर्य्येषु अश्रेयःसु श्रेयोबुद्धिः अष्टविधो मोहः पूर्वस्माज्जघन्यः,स च अस्मिता उच्यते। तथा योगिनाष्टविधम् ऐश्वर्य्यमुपादाय सिद्धो भूत्वा दृष्टानुश्रविकान् शब्दादीन् दश विषयान् भोक्ष्ये इत्येवमात्मिका प्रतिपत्तिर्महामोहो रागः। एवमेतेनैवाभिसन्धिना प्रवर्त्तमानस्य केनचित् प्रतिबद्धत्वादणिमादीनामनुत्पत्तौ तन्निबन्धनस्य दृष्टानुश्रविकविषयोप-

**शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः॥ ९॥**

स न प्रमाणोपारोही, न विपर्ययोपारोही च, वस्तुशून्यत्वेऽपि शब्दज्ञानमाहात्म्यनिबन्धनो व्यवहारो दृश्यते। तद्यथा— चैतन्यं पुरुषस्य स्वरूपमिति, यदा चितिरेव पुरुषः, तदा किमत्र केन व्यपदिश्यते? भवति च व्यपदेशे वृत्तिः, यथा चैत्रस्य गौरिति। यथा प्रतिषिद्धवस्तुधर्मो निष्क्रियः पुरुषः, तिष्ठति बाणः, स्थास्यति, स्थित इति गतिनिवृत्तौ धात्वर्थमात्रं

भागेश्च असिद्धः प्रतिबन्धकविषयः क्रोधः, स तामिस्राख्यो द्वेषः। एवमणिमादिगुणसम्पत्तौ दृष्टानुश्रविकविषयप्रत्युपस्थाने च कल्पान्ते सर्वमेतन्नङ्क्ष्यतीति यः त्रासः सोऽभिनिवेशोऽन्धतामिस्रः। तदुक्तं—"भेदस्तमसोऽष्टविधो मोहस्य च दशविधो महामोहः। तामिस्रोऽष्टादशधा तथा भवति अन्धतामिस्रः॥" इति॥ ८॥

शब्दज्ञानानुपाती वस्तुशून्यो विकल्पः। ननु शब्दज्ञानानुपाती चेदागमप्रमाणान्तर्गतो विकल्पः प्रसज्येत, निर्वस्तुकत्वे वा विपर्ययः स्यात्? इत्यत आह, स नेति।—स न प्रमाणान्तर्गतः, विपर्ययान्तर्गतः वा, कस्मात्? यतः वस्तु इति। वस्तुशून्यत्वेऽपि इति प्रमाणान्तर्गतिं निषेधयति, शब्दज्ञानमाहात्म्यनिबन्धन इति विपर्ययान्तर्गतिम्। एतदुक्तं भवति—क्वचिदभेदे भेदमारोपयति, क्वचित् पुनर्भिन्नानामभेद, ततो भेदस्याभेदस्य च वस्तुतोऽभावात् तदाभासी विकल्पो न प्रमाणं नापि विपर्ययः, व्यवहाराविसंवादादिति। शास्त्रप्रसिद्धमुदाहरणमाह— तद्यथेति। किं विशेष्यं केन व्यपदिश्यते? विशेष्यते? नाभेदे विशेष्यविशेषणभाव, न हि गवा गौर्विशेष्यते, किन्तु भिन्नेन चैत्रेण, तदिदमाह, भवति च व्यपदेशे वृत्तिः इति।—व्यपदेश्यव्यपदेशकयोर्भावो व्यपदेशो विशेषणविशेष्यभाव इति यावत् तस्मिन् वृत्तिर्वाक्यस्य, यथा चैत्रस्य गौरिति। शास्त्रीयमेवोदाहरणान्तरं समुच्चिनोति, यथेति।—प्रतिषिद्धो वस्तुनः पृथिव्यादेः धर्मः परिस्पन्दो यस्य स तथोक्तः, कोऽसौ? निष्क्रियः पुरुषः, न खलु साङ्ख्यीये राद्धान्तेऽभावो नाम कश्चिदस्ति वस्तुधर्मो येन पुरुषो विशेष्यते इत्यर्थः। क्वचित्पाठः "प्रतिषिद्धा वस्तुधर्माः" इति। तस्यार्थः,—प्रतिषेधव्याप्ताः प्रतिषिद्धाः, न वस्तुधर्माणां तद्व्याप्यता, भावाभावयो असम्बन्धात्, अथ च तथा प्रतीतिरिति।

लौकिकमुदाहरणमाह, तिष्ठति बाण इति।—यथा हि पचति भिन्न-

गम्यते, तथा अनुत्पत्तिधर्म्मा पुरुष इति उत्पत्तिधर्म्मस्य अभावमात्रम् अवगम्यते, न पुरुषान्वयी धर्म्मः, तस्माद्विकल्पितः स धर्म्मः, तेन च अस्ति व्यवहार इति ॥ ९ ॥

## अभावप्रत्ययालम्बना वृत्तिर्निद्रा ॥ १० ॥

सा च सम्प्रबोधे प्रत्यवमर्शात् प्रत्ययविशेषः। कथम्? सुखमहमस्वाप्सं, प्रसन्नं मे मनः, प्रज्ञां मे विशारदीकरोति। दुःख-

---

त्तीत्यत्र पूर्वापरीभूतः कर्म्मक्षणप्रचय एकफलावच्छिन्नः प्रतीयते, इत्येवं तिष्ठतीत्यत्रापि पूर्वापरीभावमेवाह—स्थास्यति स्थित इति। ननु भवतु पाकवत् पूर्वापरीभूतया अवस्थानक्रियया बाणाद्भिन्नया बाणस्य व्यपदेशः? इत्यत आह, गतिनिवृत्तौ धात्वर्थमात्रं गम्यते इति।—गतिनिवृत्तिरेव तावत् कल्पिता, तस्यापि भावरूपत्वं, तत्रापि पूर्वापरीभाव इत्यहो! कल्पनापरम्परेत्यर्थः। अभावः कल्पितो भाव इव चानुगत इव च सर्वपुरुषेषु गम्यते, न पुनः पुरुषव्यतिरिक्तो धर्म्मः कश्चित् इति। उदाहरणान्तरमाह—तथाऽनुत्पत्तिधर्म्मेति। प्रमाणविपर्य्ययाभ्यामन्या न विकल्पवृत्तिरिति वादिनो बहवः प्रतिपेदिरे, तत्प्रतिबोधनाय उदाहरणप्रपञ्च इति मन्तव्यम् इति ॥ ९ ॥

अभावप्रत्ययालम्बना वृत्तिर्निद्रा। अधिकृतं हि वृत्तिपदमनुवादकं, प्रमाणविपर्य्ययविकल्पस्मृतीनां वृत्तित्वं प्रति परीक्षकाणामविप्रतिपत्तेः, अतस्तदनूद्यते विशेषविधानाय, निद्रायास्तु वृत्तित्वे परीक्षकाणामस्ति विप्रतिपत्तिरिति वृत्तित्वं विधेयम्। न च प्रकृतमनुवादकं विधानाय कल्पत इति पुनर्वृत्तिग्रहणम्। जाग्रत्स्वप्नवृत्तीनामभावस्तस्य प्रत्ययः कारणं बुद्धिसत्त्वाच्छादकं तमः तदेवालम्बनं विषयो यस्याः सा तथोक्ता वृत्तिर्निद्रा। बुद्धिसत्त्वे हि त्रिगुणे यदा सत्त्वरजसी अभिभूय समस्तकारणावरकमाविरस्ति तमस्तदा बुद्धेर्विषयाकारपरिणामाभावादुद्भूततमोमयीं बुद्धिमवबुध्यमानः पुरुषः सुषुप्तोऽन्तःसंज्ञ इत्युच्यते। कस्मात्पुनः निरोधसमाध्योरिव वृत्त्यभाव एव न निद्रा? इत्यत आह, सा इति।—सा च सम्प्रबोधे प्रत्यवमर्शात् सोपपत्तिकात् स्मरणात् प्रत्ययविशेषः। कथम्? यदा हि सत्त्वसचिवं तम आविरस्ति तदैतादृशः प्रत्यवमर्शः सुप्तोत्थितस्य भवति। सुखमहमस्वाप्सं प्रसन्नं मे मनः, प्रज्ञां मे विशारदीकरोति स्वच्छीकरोति इति। यदा तु रजःसचिवं तम आविरस्ति तदेदृशः प्रत्यवमर्श इत्याह,

महमस्वाप्सं, स्त्यानं मे मनो भ्रमत्यनवस्थितम् । गाढं मूढो-ऽहमस्वाप्सं, गुरूणि मे गात्राणि, क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठतीति । स खलु अयं प्रबुद्धस्य प्रत्यवमर्शो न स्यात्, असति प्रत्ययानुभवे तदाश्रिताः स्मृतयश्च तद्विषया न स्युः, तस्मात् प्रत्ययविशेषो निद्रा । सा च समाधावितरप्रत्ययवन्निरोद्धव्येति ॥ १० ॥

## अनुभूतविषयासम्प्रमोषः स्मृतिः ॥ ११ ॥

किं प्रत्ययस्य चित्तं स्मरति ? आहोस्वित् विषयस्य ? इति । ग्राह्योपरक्तः प्रत्ययो ग्राह्यग्रहणोभयाकारनिर्भासः तथा-

---

दुःखमहमस्वाप्सम् इति, स्त्यानम् अकर्मण्यं मे मनः, कस्मात् ? यतो भ्रमति अनवस्थितम् । नितान्ताभिभूतरजःसत्त्वे तमःसमुल्लासे स्वापे प्रबुद्धस्य प्रत्यवमर्शमाह, गाढं मूढोऽहमस्वाप्सं, गुरूणि मे गात्राणि, क्लान्तं मे चित्तमलसं मुषितमिव तिष्ठतीति । साध्यव्यतिरेके हेतुव्यतिरेकमाह, स खल्वयमिति ।—प्रबुद्धस्य प्रबुद्धमात्रस्य । प्रत्ययानुभवे वृत्त्यभावकारणानुभवे । तदाश्रिताः बोधकाल इत्यर्थः । ननु प्रमाणादयो व्युत्थानचित्ताधिकरणा निरुध्यन्तां समाधिप्रतिपक्षत्वात्, निद्रायास्तु एकाग्रवृत्तितुल्यायाः कथं समाधिप्रतिपक्षता ? इत्यत आह, सा च समाधाविति ।—एकाग्रतुल्याऽपि तामसत्वेन निद्रा सबीजनिर्बीजसमाधिप्रतिपक्षेति साऽपि निरोद्धव्या इत्यर्थः ॥ १० ॥

अनुभूतविषयासम्प्रमोषः स्मृतिः । प्रमाणादिभिः अनुभूते विषये योऽसम्प्रमोषः अस्तेयः सा स्मृतिः । संस्कारमात्रजन्यस्य हि ज्ञानस्य संस्कारकारणानुभवावभासितो विषय आत्मीयः, तदधिकविषयपरिग्रहस्तु सम्प्रमोषः स्तेयः, कस्मात् ? साद‍ृश्यात्, मुषस्तेय इत्यस्मात् सम्प्रमोषपदव्युत्पत्तेः । एतदुक्तं भवति—सर्वे प्रमाणादयोऽनधिगतमर्थं सामान्यतः प्रकारतो वा अधिगमयन्ति, स्मृतिः पुनर्न पूर्वानुभवमर्य्यादामतिक्रामति तद्विषया तदूनविषया वा, न तु तदधिकविषया, सोऽयं वृत्त्यन्तरादविशेषः स्मृतेः इति । विमृशति, किं प्रत्ययस्येति ।—ग्राह्यप्रवणत्वात् अनुभवस्य स्वानुभवाभावात् तज्जः स संस्कारो ग्राह्यमेव स्मारयतीति प्रतिभाति, अनुभवमात्रजनितत्वाच्चानुभवमेवेति विमृश्य उपपत्तित उभयस्मरणमेवावधारयति ।

जातीयकं संस्कारमारभते, स संस्कारः स्वव्यञ्जकाञ्जनः तदाकारामेव ग्राह्यग्रहणोभयात्मिकां स्मृतिं जनयति। तत्र ग्रहणाकारपूर्वा बुद्धिः, ग्राह्याकारपूर्वा स्मृतिः। सा च द्वयी भावितस्मर्त्तव्या चाभावितस्मर्त्तव्या च। स्वप्ने भावितस्मर्त्तव्या, जाग्रत्समये तु अभावितस्मर्त्तव्येति। सर्वाः स्मृतयः प्रमाणविपर्य्ययविकल्पनिद्रास्मृतीनाम् अनुभवात् भवन्ति। सर्वाश्चैता वृत्तयः सुखदुःखमोहात्मिकाः, सुखदुःखमोहाश्च क्लेशेषु व्याख्येयाः। सुखानुशयी राग, दुःखानुशयी द्वेषः, मोहः पुनः अविद्येति; एताः सर्वा वृत्तयो निरोद्धव्याः, आसां निरोधे सम्प्रज्ञातो वा समाधिर्भवति असम्प्रज्ञातो वेति ॥११॥

---

ग्राह्यप्रवणतया ग्राह्योपरक्तः, परमार्थतस्तु ग्राह्यग्रहणे एव उभयं तयोराकारं स्वरूपं निर्भासयति प्रकाशयति। स्वव्यञ्जकं कारणमञ्जनमाकारो यस्य स तथोक्तः स्वकारणाकार इत्यर्थः। यद्वा व्यञ्जकमुद्बोधकम् अञ्जनं फलाभिमुखीकरणं यस्य इत्यर्थः। ननु यदि कारणविचारेण बुद्धिस्मरणयोः सारूप्यं, कस्तर्हि विशेषः? इत्यत आह, तत्र ग्रहणेति।—ग्रहणमुपादानं, न च गृहीतस्य उपादानं सम्भवति, तदनेन अनधिगतबोधनं बुद्धिरित्युक्तं, ग्रहणाकारो ग्रहणरूपं पूर्वं प्रधानं यस्याः सा तथोक्ता। विकल्पितश्चायमभेदेऽपि बुद्धिग्रहणयोः गुणप्रधानभाव इति। ग्राह्याकारः पूर्वः प्रथमो यस्याः सा तथोक्ता। इदमेव च ग्राह्याकारस्य ग्राह्यस्य पूर्वत्वं यद्वृत्त्यन्तरविषयीकृतत्वमर्थस्य, तदनेन वृत्त्यन्तरविषयीकृतगोचरा स्मृतिरित्युक्तं भवति, सोऽयमसम्प्रमोष इति। ननु अस्ति स्मृतेरपि सम्प्रमोषः, दर्शयति हि पितादिरतीतस्य देशकालान्तरानुभूतस्य अननुभूतचरदेशकालान्तरसम्बन्धं स्वप्नः? इत्यत आह, सा च द्वयीति।—भावितः कल्पितः स्मर्त्तव्यो यया सा तथोक्ता। अभावितोऽकल्पितः, पारमार्थिक इति यावत्। नेयं स्मृतिः, अपि तु विपर्य्यस्तलक्षणोपपन्नत्वात् स्मृत्याभासतया तु स्मृतिरुक्ता, प्रमाणाभासमिव प्रमाणमिति भावः। कस्मात् पुनरन्ते स्मृतेरुपन्यासः? इत्यत आह, सर्वाः स्मृतय इति।—अनुभवः प्राप्तिः, प्राप्तिपूर्वा वृत्तिः स्मृतिस्ततः स्मृतीनामुपजन इत्यर्थः। ननु ये पुरुषं क्लिश्यन्ति ते निरोद्धव्याः प्रेक्षावता, क्लेशाश्च तथा न वृत्तयः, तत् किमर्थमासां निरोधः? इत्यत आह, सर्वाश्चैता इति।—सुगमम् ॥११॥

अथ आसां निरोधे क उपायः ? इति—

**अभ्यासवैराग्याभ्यां तन्निरोधः॥ १२॥**

चित्तनदी नाम उभयतोवाहिनी; वहति कल्याणाय, वहति पापाय च। या तु कैवल्यप्राग्भाराविवेकविषयनिम्ना सा कल्याणवहा। संसारप्राग्भाराविवेकविषयनिम्ना पापवहा। तत्र वैराग्येण विषयस्रोतः खिलीक्रियते, विवेकदर्शनाभ्यासेन विवेकस्रोत उद्घाट्यते इत्युभयाधीनश्चित्तवृत्तिनिरोधः॥ १२॥

**तत्र स्थितौ यत्नोऽभ्यासः॥ १३॥**

चित्तस्यावृत्तिकस्य प्रशान्तवाहिता स्थितिः, तदर्थः प्रयत्नो वीर्य्यमुत्साहः, तत्सम्पिपादयिषया तत्साधनानुष्ठानमभ्यासः॥ १३॥

**स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढ़-भूमिः॥ १४॥**

दीर्घकालासेवितः निरन्तरासेवितः तपसा ब्रह्मचर्य्येण

---

निरोधोपायं पृच्छति—अथेति। सूत्रेणोत्तरमाह, अभ्यासवैराग्याभ्यां तन्निरोधः। अभ्यासवैराग्ययोर्निरोधे जनयितव्ये अवान्तरव्यापारभेदेन समुच्चयो न तु विकल्प इत्याह—चित्तनदीति। प्राग्भारः प्रबन्धः, निम्नता गम्भीरता, अगाधतेति यावत्॥ १२॥

अत्राभ्यासस्य स्वरूपप्रयोजनाभ्यां लक्षणमाह—तत्र स्थितौ यत्नो अभ्यासः। तद्व्याचष्टे, चित्तस्य इति।—अवृत्तिकस्य राजसतामसवृत्तिरहितस्य प्रशान्तवाहिता विमलता, सात्त्विकवृत्तिवाहितैकाग्रता स्थितिः। तदर्थं इति।—स्थिताविति निमित्तसप्तमी व्याख्याता, यथा चर्म्मणि द्वीपिनं हन्तीति। प्रयत्नमेव पर्य्यायाभ्यां विशदयति—वीर्य्यमुत्साह इति। तस्येच्छायोनितामाह, तत्सम्पिपादयिषया इति।—तदिति स्थितिं परामृशति। प्रयत्नस्य विषयमाह, तत्साधनेति।—स्थितिसाधनानि अन्तरङ्गवहिरङ्गाणि यमनियमादीनि साधनगोचरः कर्त्तृव्यापारः, न फलगोचर इत्यर्थः॥ १३॥

नतु व्युत्थानसंस्कारेण अनादिपरिपन्थिना प्रतिबद्धोऽभ्यासः कथं स्थित्यै कल्पते ?

विद्यया श्रद्धया च सम्पादितः सत्कारवान् दृढभूमिर्भवति। व्युत्थानसंस्कारेण द्रागित्येवानभिभूतविषय इत्यर्थः॥ १४॥

**दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्॥ १५॥**

स्त्रियोऽन्नपानमैश्वर्य्यमिति दृष्टविषयवितृष्णस्य स्वर्गवैदेह्य-प्रकृतिलयत्वप्राप्तावानुश्रविकविषये वितृष्णस्य दिव्यादिव्य-विषयसम्प्रयोगेऽपि चित्तस्य विषयदोषदर्शिनः प्रसङ्ख्यानबलाद-नाभोगात्मिका हेयोपादेयशून्या वशीकारसंज्ञा वैराग्यम्॥१५॥

---

इत्यत आह, स तु दीर्घकालनैरन्तर्य्यसत्कारासेवितो दृढभूमिः। सोऽय-मभ्यासो विशेषणत्रयसम्पन्नः सन् दृढावस्थः, न सहसा व्युत्थानसंस्कारैरभिभूत-स्थितिरूपविषयो भवति, यदि पुनरेवम्भूतमपि अभ्यासं कृत्वा उपरमेत् ततः काल-परिवासेनाभिभवेत्, तस्मान्नोपरन्तव्यमिति भावः॥ १४॥

वैराग्यमाह, दृष्टानुश्रविकविषयवितृष्णस्य वशीकारसंज्ञा वैराग्यम्। चेतना-चेतनेषु दृष्टविषयेषु वितृष्णतामाह, स्त्रिय इति।—ऐश्वर्य्यमाधिपत्यम्। अनुश्रवो वेदः, ततोऽधिगता आनुश्रविकाः स्वर्गादयः, तत्रापि वैतृष्ण्यमाह, स्वर्गेति।—देहरहिता विदेहाः करणेषु लीनाः, तेषां भावो वैदेह्यम्, अन्ये तु प्रकृतिमेवात्मानमभिमन्यमानाः प्रकृत्युपासकाः प्रकृतौ साधिकारायामेव लीनास्तेषां भावः प्रकृतिलयत्वं, तत्-प्राप्तिविषये वितृष्णस्य, आनुश्रविकविषये वितृष्णो हि स्वर्गादिप्राप्तिविषये वितृष्ण उच्यते। ननु यदि वैतृष्ण्यमात्रं वैराग्यं, हन्त विषयाप्राप्तावपि तदस्तीति वैराग्यं स्यात्? इत्यत आह, दिव्यादिव्येति।—न वैतृष्ण्यमात्रं वैराग्यम्, अपि तु दिव्या-दिव्यविषयसम्प्रयोगेऽपि चित्तस्यानाभोगात्मिका। तामेव स्पष्टयति, हेय इति।—हेयोपादेयशून्या सङ्गदोषरहिता या उपेक्षा बुद्धिर्वशीकारसंज्ञा। कुतः पुनरियम्? इत्यत आह, प्रसङ्ख्यानबलादिति।—तापत्रयपरीतता विषयाणां दोषः, तत्परिभावनया तत्साक्षात्कारः प्रसङ्ख्यानं तद्बलादित्यर्थः। यतमानसंज्ञा व्यति-रेकसंज्ञा एकेन्द्रियसंज्ञा वशीकारसंज्ञा चेति चतस्रः संज्ञा इत्यागमिनः। रागादयः खलु कषायाश्चित्तवर्त्तिनः, तैरिन्द्रियाणि यथ स्वं विषयेषु प्रवर्त्यन्ते, तन्मा प्रवर्त्तिषतेन्द्रियाणि तत्तद्विषयेषु इति तत्परिपाचनायारम्भः प्रयत्नः,

**तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम् ॥ १६ ॥**

दृष्टाऽऽनुश्रविकविषयदोषदर्शी विरक्तः पुरुषदर्शनाभ्यासात् तच्छुद्धिप्रविवेकाप्यायितबुद्धिर्गुणेभ्यो व्यक्ताव्यक्तधर्मकेभ्यो विरक्त इति तत् द्वयं वैराग्यम्। तत्र यदुत्तरं तत् ज्ञानप्रसादमात्रम्; यस्योदये प्रत्युदितख्यातिरेवं मन्यते—प्राप्तं प्रापणीयं, क्षीणाः क्षेतव्याः क्लेशाः, छिन्नः श्लिष्टपर्वा भव-

---

सा यतमानसंज्ञा। तदारम्भे सति केचित्कषायाः पक्वाः, पच्यन्ते, पक्ष्यन्ते च केचित्, तत्र पच्यमानेभ्यः पक्वानां व्यतिरेकेणावधारणं व्यतिरेकसंज्ञा। इन्द्रियप्रवर्त्तनासमर्थतया पक्वानामौत्सुक्यमात्रेण मनसि व्यवस्थानमेकेन्द्रियसंज्ञा। औत्सुक्यमात्रस्यापि निवृत्तिरुपस्थितेष्वपि दिव्यादिव्यविषयेषु उपेक्षाबुद्धिः संज्ञात्रयात्परा वशीकारसंज्ञा। एतयैव च पूर्वासां चरितार्थत्वान्न ताः पृथगुक्ता इति सर्वमवदातम् ॥ १५ ॥

अपरं वैराग्यमुक्त्वा परमाह, तत्परं पुरुषख्यातेर्गुणवैतृष्ण्यम्। अपरवैराग्यस्य परवैराग्यं प्रति कारणत्वम्। तत्र च द्वारमादर्शयति, दृष्टानुश्रविकविषयदोषदर्शी विरक्तः इति।—अनेनापरं वैराग्यं दर्शितम्। पुरुषदर्शनाभ्यासादागमानुमानाचार्य्योपदेशसमधिगतस्य पुरुषस्य यद्दर्शनं तस्याभ्यासः पौनःपुन्येन निषेवणं तस्मात् तस्य दर्शनस्य शुद्धिः रजस्तमोहान्या सत्त्वैकतानता तया यो गुणपुरुषयोः प्रकर्षेण विवेकः पुरुषः शुद्धोऽनन्तः, तद्विपरीता गुणा इति तेनाप्यायिता बुद्धिर्यस्य योगिनः स तथोक्तः, तदनेन धर्म्ममेघाख्यः समाधिरुक्तः। स तथाभूतो योगी गुणेभ्यो व्यक्ताव्यक्तधर्म्मकेभ्यः सर्वथा विरक्तः सत्त्वपुरुषान्यताख्यातावपि गुणात्मिकायां यावद्विरक्त इति, तत्तस्मात् द्वयं वैराग्यम्। पूर्वं हि वैराग्यं सत्त्वसमुद्रेकविधूततमसि रजःकणकलङ्कसम्पृक्ते चित्तसत्त्वे, तच्च तौष्टिकानामपि समानं, ते हि तेनैव प्रकृतिलया बभुवुः; तथोक्तं "वैराग्यात् प्रकृतिलयः" इति। तत्र तयोर्द्वयोर्मध्ये यदुत्तरं, तत् ज्ञानप्रसादमात्रं, मात्रग्रहणेन निर्विषयतां सूचयति, तदेवं हि तादृशं चित्तसत्त्वं रजोलेशमलेनापि अपरामृष्टमस्याश्रयः, अतएव "ज्ञानप्रसादः" इत्युच्यते। चित्तसत्त्वं हि प्रसादस्वभावमपि रजस्तमःसम्पर्कान्मलिनतामनुभवति, वैराग्याभ्यासविमलवारिधाराधौतसमस्तरजस्तमोमलं त्वतिप्रसन्नं ज्ञानप्रसादमात्रपरिशेषं भवति। तस्य गुणानुपादेयत्वाय दर्शयति, यस्योदये इति।—यस्योदये सति

सङ्क्रमः, यस्य अविच्छेदात् जनित्वा म्रियते, मृत्वा च जायत इति ज्ञानस्यैव परा काष्ठा वैराग्यम्, एतस्यैव हि नान्तरीयकं कैवल्यमिति ॥ १६ ॥

अथ उपायद्वयेन निरुद्धचित्तवृत्तेः कथमुच्यते सम्प्रज्ञातः समाधिः ? इति ।

**वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः ॥ १७ ॥**

वितर्कः,—चित्तस्य आलम्बने स्थूल आभोगः । सूक्ष्मो

---

योगी प्रत्युदितख्यातिः ख्यातिविशेषे सति वर्त्तमानख्यातिमानित्यर्थः । प्रापणीयं कैवल्यं प्राप्तं, यथा वक्ष्यति, "जीवन्नेव विद्वान् मुक्तो भवति" इति, संस्कारमात्रस्य छिन्नमूलस्य सत्त्वादिति भावः । कुतः प्राप्तम् ? यत क्षीणाः क्षेतव्याः क्लेशाः अविद्यादयः सवासनाः । नन्वस्ति धर्म्माधर्म्मसमूहो भवस्य जन्ममरणप्रबन्धस्य संक्रमः प्राणिनां, तत् कुतः कैवल्यम् ? इत्यत आह, छिन्न इति ।— श्लिष्टानि निःसन्धीनि पर्वाणि यस्य स तथोक्तः ; धर्म्माधर्म्मसमूहस्य समूहिनः पर्वाणि, तानि श्लिष्टानि, न हि जातु जन्तुर्मरणजन्मप्रबन्धेन वियुज्यते । सोऽयं भवसङ्क्रमः क्लेशक्षये छिन्नः । यथा वक्ष्यति "क्लेशमूलः कर्माशयः" ( पा० २ सू० १२ ) "सति मूले तद्विपाकः" ( पा० २ सू० १३ ) इति । ननु प्रसङ्ख्यानपरिपाकं धर्म्ममेघनिरोधश्च अन्तरा किं तदस्ति, यत् ज्ञानप्रसादमात्रम् ? इत्यत आह, ज्ञानस्यैव परा काष्ठा इति । धर्म्ममेघभेद एव परं वैराग्यं नान्यत् । यथा वक्ष्यति "प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्म्ममेघ समाधिः" ( पा० ४ सू० २९ ) "तदा सर्वावरणमलापेतस्य ज्ञानस्यानन्त्यात् ज्ञेयमल्पम् ( पा० ४ सू० ३१ ) इति च । तस्मादेतस्य हि नान्तरीयकमविनाभावि कैवल्यमिति ॥ १६ ॥

उपायमभिधाय सप्रकारोपेयकथनाय पृच्छति—अथोपायद्वयेनेति । वितर्कविचारानन्दास्मितारूपानुगमात् सम्प्रज्ञातः । सम्प्रज्ञातपूर्वकत्वादसम्प्रज्ञातस्य प्रथमं सम्प्रज्ञातोपवर्णनं सम्प्रज्ञातसामान्यं वितर्कविचारानन्दास्मितानां रूपैः स्वरूपैरनुगमात् प्रतिपत्तव्यम् । वितर्कं विवृणोति, चित्तस्येति ।—स्वरूपसाक्षात्कारवती प्रज्ञा आभोगः स च स्थूलविषयत्वात् स्थूलः । यथा हि प्राथमिको धानुष्कः

विचारः। आनन्दो ह्लादः। एकात्मिका संवित् अस्मिता। तत्र प्रथमः चतुष्टयानुगतः समाधिः सवितर्कः। द्वितीयो वितर्कविकलः सविचारः। तृतीयो विचारविकलः सानन्दः। चतुर्थस्तद्विकलो अस्मितामात्र इति। सर्वे एते सालम्बनाः समाधयः॥ १७॥

अथ असम्प्रज्ञातसमाधिः किमुपायः? किं-स्वभावो वा? इति,—

**विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः॥१८॥**

सर्ववृत्तिप्रत्यस्तमये संस्कारशेषो निरोधश्चित्तस्य समाधिरसम्प्रज्ञातः। तस्य परं वैराग्यम् उपायः। सालम्बनो हि

---

स्थूलमेव लक्ष्यं विध्यति अथ सूक्ष्मम्, एवं प्राथमिको योगी स्थूलमेव पाञ्चभौतिक चतुर्भुजादि ध्येयं साक्षात्करोति, अथ सूक्ष्ममिति। एवं चित्तस्यालम्बने सूक्ष्मे आभोगः स्थूलकारणभू-सूक्ष्मपञ्चतन्मात्रलिङ्गालिङ्गविषयी विचारः। तदेवं ग्राह्यविषयं दर्शयित्वा ग्रहणविषयं दर्शयति, आनन्द इति।—इन्द्रिये स्थूल आलम्बने चित्तस्याभोग आह्लादः आनन्दः। प्रकाशशीलतया खलु सत्त्वप्रधानादहङ्कारादिन्द्रियाण्युत्पन्नानि, सत्त्वं सुखमिति, तान्यपि सुखानि इति, तस्मिन्नाभोग आह्लाद इति। ग्रहीतृविषयं सम्प्रज्ञातमाह, एकात्मिका संवित् इति।—अस्मिताप्रभवाणि इन्द्रियाणि, तेनैषामस्मिता सूक्ष्मं रूपं, सा चात्मना ग्रहीत्रा सह बुद्धिरेकात्मिका संविदिति, तस्याञ्च ग्रहीतुरन्तर्भावाद्भवति ग्रहीतृविषयः सम्प्रज्ञात इति। चतुर्णामपरमवान्तरविशेषमाह, तत्र प्रथमः इति।—कार्य्यं कारणानुप्रविष्टं, न कारणं कार्य्येण, तदयं स्थूल आभोगः स्थूलसूक्ष्मेन्द्रियास्मिताकारणचतुष्टयानुगतो भवति, उत्तरे तु त्रिद्व्येककारणकास्त्रिद्व्येकरूपा भवन्ति। असम्प्रज्ञाताद्भिनत्ति—सर्व एत इति॥ १७॥

क्रमप्राप्तमसम्प्रज्ञातमवतारयितुं पृच्छति—अथ इति। विरामप्रत्ययाभ्यासपूर्वः संस्कारशेषोऽन्यः। पूर्वपदेनोपायकथनम्, उत्तराभ्याञ्च स्वरूपकथनम्। मध्यमं पदं विवृणोति—सर्ववृत्ति इति। प्रथमं पदं व्याचष्टे—तस्य परम् इति। विरामो वृत्तीनामभावस्तस्य प्रत्ययः कारणं तस्याभ्यासः तदनुष्ठानं

अभ्यासः तत्साधनाय न कल्पत इति। विरामप्रत्ययो निर्वस्तुक आलम्बनीक्रियते, स च अर्थशून्यः, तदभ्यासपूर्वं चित्तं निरालम्बनमभावप्राप्तमिव भवति इत्येष निर्बीजः समाधिरसम्प्रज्ञातः ॥ १८ ॥

स खलु अयं द्विविध उपायप्रत्ययो भवप्रत्ययश्च, तत्र उपायप्रत्ययो योगिनां भवति,—

**भवप्रत्ययो विदेहप्रकृतिलयानाम् ॥ १९ ॥**

विदेहानां देवानां भवप्रत्ययः, ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिव अनुभवन्तः स्वसंस्कारविपाकं तथा जातीयकमतिवाहयन्ति। तथा प्रकृतिलयाः साधि-

---

पौनःपुन्येन तदेव पूर्वं यस्य स तथा। अथापरं वैराग्यं निरोधकारणं कस्मान्न भवतीयत आह सालम्बनो हि इति।—कार्य्यसरूपं कारणं युज्यते न विरूपं, विरूपं चापरं वैराग्यं सालम्बनं निरालम्बनसमाधिना कार्य्येण, तस्मान्निरालम्बनादेव ज्ञानप्रसादमात्रात् तस्योत्पत्तिर्युक्ता, धर्म्ममेघसमाधिरेव हि नितान्तविगलितरजस्तमोमलात् सत्त्वादुपजातस्तद्विषयातिक्रमेण प्रवर्त्तमानोऽनन्तो विषयावद्यदर्शी समस्तविषयपरित्यागाच्च स्वरूपप्रतिष्ठः सन्निरालम्बनः संस्कारमात्रशेषस्य निरालम्बनस्य समाधेः कारणमुपपद्यते सारूप्यादित्यर्थः। आलम्बनीकरणम् आश्रयणम्, अभावप्राप्तमिव वृत्तिरूपकार्य्याकरणात्, निर्बीजः निरालम्बनः, अथवा बीजं क्लेशकर्म्माशयास्ते निष्क्रान्ता यस्मात् स तथा ॥ १८ ॥

निरोधसमाधेरवान्तरभेदं हानोपादानाङ्गमादर्शयति, स खल्वयमिति।—सः निरोधसमाधिर्द्विविधः उपायप्रत्ययो भवप्रत्ययश्च. उपायः वक्ष्यमाणः श्रद्धादिः प्रत्ययः कारणं यस्य निरोधसमाधेः स तथोक्तः, भवन्ति जायन्तेऽस्यां जन्तव इति भवोऽविद्या, भूतेन्द्रियेषु वा विकारेषु प्रकृतिषु वाऽव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु अनात्मस्वात्मख्यातिलौकिकानां वैराग्यसम्पन्नानां स खल्वयं भवः प्रत्ययः कारणं यस्य निरोधसमाधेः स भवप्रत्ययः। तत्र तयोर्मध्ये उपायप्रत्ययो योगिनां मोक्षमाणानां भवति, विशेषविधानेन शेषस्य मुमुक्षुसम्बन्धं निषेधति। केषां तर्हि भवप्रत्ययः? इत्यत सूत्रेणोत्तरमाह, भवप्रत्ययो विदेहप्रकृति-

कारे चेतसि प्रकृतिलीने कैवल्यपदमिव अनुभवन्ति यावन्न पुनरावर्त्तते अधिकारवशाच्चित्तमिति ॥ १९ ॥

**श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वक इतरेषाम् ॥ २० ॥**

उपायप्रत्ययो योगिनां भवति, श्रद्धा—चेतसः सम्प्रसादः, सा हि जननीव कल्याणी योगिनं पाति; तस्य

लयानाम् ।—विदेहाश्च प्रकृतिलयाश्च तेषामित्यर्थः । तत् व्याचष्टे, विदेहानां देवानां भवप्रत्यय इति ।—भूतेन्द्रियाणामन्यतमदात्मत्वेन प्रतिपन्नास्तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमिन्द्रियेषु भूतेषु वा लीनाः संस्कारमात्रावशेषमनसः षाट्कौशिकशरीररहिता विदेहाः, ते हि स्वसंस्कारमात्रोपयोगेन चित्तेन कैवल्यपदमिवानुभवन्तः प्राप्नुवन्तः विदेहाः, अवृत्तिकत्वञ्च कैवल्येन साम्यं, साधिकारसंस्कारशेषता च वैरूप्यम् । "संस्कारमात्रोपभोगेन" इति क्वचित्पाठः ; तस्यार्थः,—संस्कारमात्रमेव उपभोगो यस्य न तु चित्तवृत्तिः इत्यर्थः । प्राप्तावधयः स्वसंस्कारविपाकं तथा जातीयकम् अतिवाहयन्ति अतिक्रामन्ति, पुनरपि संसारे विशन्ति, तथा च वायुप्रोक्तं "दशमन्वन्तराणीह तिष्ठन्तीन्द्रियचिन्तकाः । भौतिकास्तु शतं पूर्णम्" इति । तथा प्रकृतिलयाश्च अव्यक्तमहदहङ्कारपञ्चतन्मात्रेषु अन्यतमदात्मत्वेन प्रतिपन्नाः तदुपासनया तद्वासनावासितान्तःकरणाः पिण्डपातानन्तरमव्यक्तादीनामन्यतमस्मिन् लीनाः साधिकारे अचरितार्थे, एवं हि चरितार्थं चेतः स्यात् यदि विवेकख्यातिमपि जनयेत्, अजनितसत्त्वपुरुषान्यताख्यातेस्तु चेतसोऽचरितार्थस्यास्ति साधिकारितेति । साधिकारे चेतसि प्रकृतौ लीने कैवल्यपदमिवानुभवन्ति यावन्न पुनरावर्त्ततेऽधिकारवशाच्चित्तमिति । प्रकृतिसाम्यमुपगतमपि अवधिं प्राप्य पुनरपि प्रादुर्भवति ततो विविच्यते, यथा वर्षाऽतिपाते मृद्भावमुपगतो मण्डूकदेहः पुनरम्भोदवारिधाराऽवसेकान्मण्डूकदेहभावमनुभवतीति । तथाच वायुप्रोक्तं "सहस्रन्त्वाभिमानिका बौद्धाः दशसहस्राणि तिष्ठन्ति विगतज्वराः । पूर्णं शतसहस्रन्तु तिष्ठन्त्यव्यक्तचिन्तकाः ॥ पुरुषं निर्गुणं प्राप्य कालसङ्ख्या न विद्यते ॥" इति; तदस्य पुनर्भवहेतुतया हेयत्वं सिद्धम् ॥ १९ ॥

योगिनान्तु समाधेरुपायक्रममाह, श्रद्धावीर्य्यस्मृतिसमाधिप्रज्ञापूर्वक इत-

श्रद्दधानस्य विवेकार्थिनो वीर्य्यमुपजायते, समुपजातवीर्य्यस्य स्मृतिरुपतिष्ठते, स्मृत्युपस्थाने च चित्तमनाकुलं समाधीयते, समाहितचित्तस्य प्रज्ञाविवेक उपावर्त्तते, येन यथावद्वस्तु जानाति, तदभ्यासात् तद्विषयाच्च वैराग्यादसम्प्रज्ञातः समाधिर्भवति ॥ २० ॥

ते खलु नव योगिनो मृदुमध्याधिमात्रोपाया भवन्ति। तत् यथा मृदूपायः, मध्योपायः, अधिमात्रोपाय इति। तत्र मृदूपायोऽपि त्रिविधो मृदुसंवेगः मध्यसंवेगः तीव्रसंवेग इति। तथा मध्योपायः तथा अधिमात्रोपाय इति।

तत्र अधिमात्रोपायानाम्—

**तीव्रसंवेगानामासन्नः ॥ २१ ॥**

**समाधिलाभः समाधिफलञ्च भवति इति ॥ २१ ॥**



---

रेषाम्। ननु इन्द्रियादिचिन्तका अपि श्रद्धावन्त एव? इत्यत आह, श्रद्धा चेतसः सम्प्रसादः इति।—स चागमानुमानाचार्य्योपदेशसमधिगततत्त्वविषयो भवति, स हि चेतसः सम्प्रसादोऽभिरुचिरतीच्छा श्रद्धा, नेन्द्रियादिषु आत्माऽभिमानिनामभिरुचिः, असम्प्रसादो हि सः, व्यामोहमूलत्वादित्यर्थः। कुतोऽसावेव श्रद्धा? इत्यत आह, सा हि जननीव कल्याणी योगिनं पाति विमार्गपातजन्मनोऽनर्थात्। सोऽयमिच्छाविशेष इष्यमाणविषयं यत्नं प्रसूत इत्याह—तस्य हि श्रद्दधानस्य। तस्य विवरणं, विवेकार्थिनो वीर्य्यमुपजायते। स्मृतिः ध्यानम्। अनाकुलम् अविच्छिन्नं, समाधीयते योगाङ्गसमाधियुक्तं भवति। यमनियमादिनान्तरीयकसमाध्युपन्यासेन च यमनियमादयोऽपि सूचिताः। तदेवमखिलयोगाङ्गसम्पन्नस्य सम्प्रज्ञातो जायत इत्याह, समाहितचित्तस्य इति।—प्रज्ञाया विवेकः प्रकर्षः उपजायते। सम्प्रज्ञातपूर्व्वमसम्प्रज्ञातोत्पादमाह, तदभ्यासात् इति।—तत्रैव तत्तद्भूमिप्राप्तौ तत्तद्विषयाच्च वैराग्यात् असम्प्रज्ञातः समाधिर्भवति, स हि कैवल्यहेतुः, सत्त्वपुरुषान्यताख्यातिपूर्वो हि निरोधश्चित्तमखिलकार्य्यकरणेन चरितार्थमधिकारादवसादयति ॥ २० ॥

ननु श्रद्धादयश्चेत् योगोपायाः, तर्हि सर्वेषामविशेषेण समाधि-तत्फले स्याताम्?








**मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः ॥ २२ ॥**

मृदुतीव्रो मध्यतीव्रः अधिमात्रतीव्र इति ततोऽपि विशेषः। तद्विशेषान्मृदुतीव्रसंवेगस्य आसन्नः, ततो मध्यतीव्रसंवेगस्य आसन्नतरः, तस्मात् अधिमात्रतीव्रसंवेगस्याधिमात्रोपायस्यापि आसन्नतमः समाधिलाभः समाधिफलञ्चेति ॥ २२ ॥

किमेतस्मादेव आसन्नतमः समाधिर्भवति? अथ अस्य लाभे भवति अन्योऽपि कश्चिदुपायो न वा? इति—

**ईश्वरप्रणिधानाद्वा ॥ २३ ॥**

प्रणिधानात् भक्तिविशेषात् आवर्जित ईश्वरस्तमनुगृह्णाति अभिध्यानमात्रेण, तदभिध्यानादपि योगिन आसन्नतमः समाधिलाभः फलञ्च भवति इति ॥ २३ ॥

---

हन्येवे तु कस्यचित् सिद्धिः, कस्यचिदसिद्धिः, कस्यचिच्चिरेण सिद्धिः, कस्यचिच्चिरतरेण सिद्धिः, कस्यचित् क्षिप्रम्? इत्यत आह, ते खलु नव योगिनः इति।—उपायाः श्रद्धादयो मृदुमध्याधिमात्राः प्राग्भवीयसंस्कारादृष्टवशात् येषां ते तथोक्ताः। संवेगः वैराग्यं, तस्य अपि मृदुमध्यतीव्रता प्राग्भवीयवासनादृष्टवशादेवेति। तेषु यादृशां श्रेयीयसी सिद्धिस्तान् दर्शयति सूत्रेण, तीव्रसंवेगानामासन्नः इति सूत्रं, शेषं भाष्यम्। समाधेः सम्प्रज्ञातस्य फलमसम्प्रज्ञातस्तस्य अपि कैवल्यम् ॥ २१ ॥

मृदुमध्याधिमात्रत्वात् ततोऽपि विशेषः। निगदव्याख्यातेन भाष्येण व्याख्यातम् इति ॥ २२ ॥

सूत्रान्तरं पातयितुं विमृशति, किमेतस्मादेव इति।—न वा शब्दः संशयनिवर्त्तकः।

ईश्वरप्रणिधानाद्वा। व्याचष्टे, प्रणिधानात् इति —प्रणिधानात् भक्तिविशेषात् मानसाद्वाचिकात् कायिकाद्वा आवर्जितः अभिमुखीकृतस्तमनुगृह्णाति, अभिध्यानम् अनागतेऽर्थे इच्छा, इदमस्य अभिमतमस्त्विति, तन्मात्रेण न व्यापारान्तरेण। शेषं सुगमम् ॥ २३ ॥

अथ प्रधानपुरुषव्यतिरिक्तः कोऽयमीश्वरो नाम ? इति।

**क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः ॥ २४ ॥**

अविद्यादयः क्लेशाः, कुशलाकुशलानि कर्माणि, तत्फलं विपाकः, तदनुगुणा वासना आशयाः।

ते च मनसि वर्त्तमानाः पुरुषे व्यपदिश्यन्ते, स हि तत्फलस्य भोक्तेति, यथा जयः पराजयो वा योद्धृषु वर्त्तमानः स्वामिनि व्यपदिश्यते। यो ह्यनेन भोगेन अपरामृष्टः स पुरुषविशेष ईश्वरः।

---

ननु चेतनाचेतनाभ्यामेव व्यूढं नान्येन विश्वम्, ईश्वरश्चेदचेतनः तर्हि प्रधानं, प्रधानविकाराणामपि प्रधानमध्यपातात्, तथा च न तस्यावर्ज्जनमचेतनत्वात्, अथ चेतनस्तथाऽपि चितिशक्तेरौदासीन्यादसंसारितया चास्मितादिविरहात् कुतः आवर्ज्जनम् ? कुतश्चाभिध्यानम् ? इत्याशयवानाह—अथ प्रधान इति। अत्र सूत्रेण उत्तरमाह—क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेषः ईश्वरः। अविद्यादयः क्लेशाः क्लिश्नन्ति खल्वमी पुरुषं सांसारिकं विविधदुःखप्रहारेणेति, कुशलाकुशलानि इति धर्माधर्मास्तेषाञ्च कर्म्मजत्वात् उपचारात् कर्मत्वम्। विपाकः जात्यायुर्भोगाः, तदनुगुणाः विपाकानुगुणा वासनाः, ताश्चित्तभूमावाशेरते इत्याशयाः, न हि करभजातिनिवर्त्तकं कर्म प्राग्भवीयकरभभोगभावितां भावनां न यावदभिव्यनक्ति तावत् करभोचिताय भोगाय कल्पते, तस्मात् भवति करभजात्यनुभवजन्मा भावना करभविपाकानुगुणेति। नन्वमी क्लेशादयो बुद्धिधर्मा न कथञ्चिदपि पुरुषं परामृशन्ति, तस्मात् पुरुषग्रहणादेव तदपरामर्शसिद्धेः कृतं क्लेशकर्मेत्यादिना ? इत्यत आह, ते इति।—ते च मनसि वर्त्तमानाः सांसारिके पुरुषे व्यपदिश्यन्ते, कस्मात् ? स हि तत्फलस्य भोक्ता चेतयितेति। तस्मात् पुरुषत्वात् ईश्वरस्यापि तत्सम्बन्धः प्राप्त इति तत्प्रतिषेध उपपद्यत इत्याह, यः इति।—यो ह्यनेन बुद्धिस्थेनापि पुरुषमात्रसाधारणेन भोगेनापरामृष्टः स पुरुषविशेष ईश्वरः, विशिष्यत इति विशेषः पुरुषान्तरात् व्यवच्छिद्यते। विशेषपदव्यावर्त्त्यं

कैवल्यं प्राप्तास्तर्हि सन्ति च बहवः केवलिनः, ते हि त्रीणि बन्धनानि छित्त्वा कैवल्यं प्राप्ताः, ईश्वरस्य च तत्सम्बन्धो न भूतो न भावी, यथा मुक्तस्य पूर्वा बन्धकोटिः प्रज्ञायते, नैवमीश्वरस्य ; यथा वा प्रकृतिलीनस्य उत्तरा बन्धकोटिः सम्भाव्यते, नैवमीश्वरस्य, स तु सदैव मुक्तः सदैवेश्वर इति।

योऽसौ प्रकृष्टसत्त्वोपादानात् ईश्वरस्य शाश्वतिक उत्कर्षः

---

दर्शयितुकामः परिचोदनापूर्वं परिहरति—कैवल्यं प्राप्तास्तर्हि इति। प्रकृतिलयानां प्राकृतो बन्धः, वैकारिको विदेहानां, दक्षिणाबन्धो दिव्यादिव्यविषयभाजां, तान्यमूनि त्रीणि बन्धनानि, प्रकृतिभावनासंस्कृतमनसो हि देहपातानन्तरमेव प्रकृतिलयतामापन्ना इतीतरेषां पूर्वा बन्धकोटिः प्रज्ञायते, तेन उत्तरकोटिविधानमात्रम्, इह तु पूर्वापरकोटिनिषेध इति। सङ्क्षिप्य विशेषं दर्शयति, स तु सदैव मुक्तः सदैवेश्वरः इति।—ज्ञानक्रियाशक्तिसम्पदैश्वर्यं।

अत्र पृच्छति, योऽसौ इति।—ज्ञानक्रिये हि न चिच्छक्तेरपरिणामिन्याः सम्भवत इति रजस्तमोरहितविशुद्धचित्तसत्त्वाश्रये वक्तव्ये, न चेश्वरस्य सदामुक्तस्याविद्याप्रभवः चित्तसत्त्वसमुत्कर्षेण सह स्वस्वामिभावसम्बन्धः सम्भवतीत्यत उक्तं, प्रकृष्टसत्त्वोपादानात् इति।—नेश्वरस्य पृथग्जनस्येवाविद्यानिबन्धनश्चित्तसत्त्वेन स्वस्वामिभावः, किन्तु तापत्रयपरीतान् प्रत्यभावमहार्णवात् जन्तून् उद्धरिष्यामि ज्ञानधर्मोपदेशेन, न च ज्ञानक्रियासामर्थ्यातिशयसम्पत्तिमन्तरेण तदुपदेशः, न चेयमपहतरजस्तमोमलविशुद्धसत्त्वोपादानं विना, इति आलोच्य सत्त्वप्रकर्षमुपादत्ते भगवान् अपरामृष्टोऽपि अविद्ययाऽविद्याभिमानीव अविद्यायास्तत्त्वमविद्वान् भवति न पुनरविद्यां ह्यविद्यात्वेन सेवमानः, न खलु शैलूषो रामत्वमारोप्य तास्ताश्चेष्टा दर्शयन् भ्रान्तो भवति, तदिदमाहार्य्यमस्य रूपं न तात्त्विकमिति। स्यादेतत्, उद्दिधीर्षया भगवता सत्त्वमुपादेयं, तदुपादानेन च तदुद्दिधीर्षा अस्या अपि प्राकृतत्वात्, तथाचान्योऽन्यसंश्रय इत्यत उक्तं—शाश्वतिक इति। भवेदेतदेवं यदीयं प्रथमता सर्गस्य, भवेदनादौ तु सर्गसंहारप्रबन्धे सर्गान्तरसमुत्पन्नसञ्जिहीर्षाऽवधिसमये पूर्णे मया सत्त्वप्रकर्ष उपादेय इति प्रणिधानं कृत्वा भगवान् जगत् सञ्जहार, तदा चेश्वरचित्तसत्त्वं प्रणिधानवासितं प्रधानसाम्यमुपगतमपि परिपूर्णे महाप्रलयावधौ प्रणिधानवासनावशात्तथैवेश्वरचित्तं सत्त्वभावेन परिणमते, यथा चैत्रः श्वः प्रातरेवोत्थातव्यं मयेति प्रणिधाय सुप्तस्तदैवोत्तिष्ठति

स किं सनिमित्तः? आहोस्वित् निर्निमित्तः? इति। तस्य शास्त्रं निमित्तम्। शास्त्रं पुनः किन्निमित्तम्? प्रकृष्टसत्त्वनिमित्तम्। एतयोः शास्त्रोत्कर्षयोः ईश्वरसत्त्वे वर्त्तमानयोः अनादिः सम्बन्धः। एतस्मादेतत् भवति सदैवेश्वरः सदैव मुक्त इति। तच्च तस्यैश्वर्य्यं साम्यातिशयविनिर्मुक्तं, न तावदैश्वर्य्यान्तरेण तदतिशय्यते, यदेवातिशयि स्यात् तदेव तत् स्यात्, तस्मात् यत्र

---

प्रणिधानसंस्कारात्, तस्मादनादित्वादीश्वरप्रणिधानसत्त्वोपादानयोः शाश्वतिकत्वेन नान्योऽन्यसंश्रयः, न चेश्वरस्य चित्तसत्त्वं महाप्रलयेऽपि प्रकृतिसाम्यं नोपैतीति वाच्यम्; यस्य हि न कदाचिदपि प्रधानसाम्यं न तत् प्राधानिकं, नापि चितिशक्तिः, अशक्त्वादित्यर्थान्तरमप्रामाणिकमापद्येत, तच्चायुक्तं, प्रकृतिपुरुषव्यतिरेकेणार्थान्तराभावात्। सोऽयमीदृश ईश्वरस्य शाश्वतिक उत्कर्षः किं सनिमित्तः सप्रामाणिकः? आहोस्विन्निर्निमित्तः निष्प्रमाणकः? इति। उत्तरं, तस्य शास्त्रं निमित्तम् इति।—श्रुतिस्मृतीतिहासपुराणानि शास्त्रम्। चोदयति, शास्त्रं पुनः किन्निमित्तम् इति।—प्रत्यक्षानुमानपूर्वं हि शास्त्रं, न चेश्वरस्य सत्त्वप्रकर्षे कस्यचित् प्रत्यक्षमनुमानं वाऽस्ति, न चेश्वरप्रत्यक्षप्रभवं शास्त्रमिति युक्तं कल्पयित्वाऽपि ह्ययं स्वयं ब्रूयादात्मैश्वर्य्यप्रकाशनायेति भावः। परिहरति—प्रकृष्टसत्त्वनिमित्तम् इति।—अयमभिसन्धिः,—मन्त्रायुर्वेदेषु तावदीश्वरप्रणीतेषु प्रवृत्तिसामर्थ्यादर्थाव्यभिचारविनिश्चयात् प्रामाण्यं सिद्धं, न चौषधिभेदानां तत्तत्संयोगविशेषाणाञ्च मन्त्राणाञ्च तत्तद्वर्णाऽऽवापोद्वारेण सहस्रेणापि पुरुषायुषैर्लौकिकप्रमाणव्यवहारौ शक्तः कर्त्तुमन्वयव्यतिरेकौ। न चागमादन्वयव्यतिरेकौ, ताभ्याञ्चागमस्तत्सन्तानयोरनादित्वादिति प्रतिपादयितुं युक्तं, महाप्रलये तत्सन्तानयोः विच्छेदात्। न च तद्भावे प्रमाणाभावः, अभिन्नं प्रधानविकारी हि जगदिति प्रतिपादयिष्यते। सदृशपरिणामस्य विसदृशपरिणामता दृष्टा, यथा—क्षीरेक्षुरसादेर्दधिगुड़ादिरूपं, विसदृशपरिणामस्य पूर्वं सदृशपरिणामता च दृष्टा, तदिह प्रधानेनापि महदहङ्कारादिरूपविसदृशपरिणामेन सता भाव्यं कदाचित्सदृशपरिणामेनापि, सदृशपरिणामश्चास्य साम्यावस्था, स च महाप्रलयः; तस्मान्मन्त्रायुर्वेदप्रणयनात् तावत् भगवतो विगलितरजस्तमोमलावरणतया परितः प्रद्योतमानं बुद्धिसत्त्वमास्थेयम्। तथा चाभ्युदयनिःश्रेयसोपदेश-

काष्ठाप्राप्तिरैश्वर्य्यस्य स ईश्वरः। न च तत्समानमैश्वर्य्यमस्ति, कस्मात्? द्वयोः तुल्ययोः एकस्मिन् युगपत्कामितेऽर्थे नवमिदमस्तु पुराणमिदमस्तु इत्येकस्य सिद्धौ इतरस्य प्राकाम्यविघातादूनत्वं प्रसक्तं, द्वयोश्च तुल्ययोर्युगपत्कामितार्थप्राप्तिः नास्ति, अर्थस्य विरुद्धत्वात्. तस्मात् यस्य साम्यातिशयविनिर्मुक्तमैश्वर्य्यं स ईश्वरः, स च पुरुषविशेष इति ॥ २४ ॥

किञ्च—

**तत्र निरतिशयं सर्वज्ञवीजम् ॥ २५ ॥**

यदिदमतीतानागतप्रत्युत्पन्नप्रत्येकसमुच्चयातीन्द्रियग्रहण-

---

परोऽपि वेदराशिरीश्वरप्रणीतस्तद्बुद्धिसत्त्वप्रकर्षादेव भवितुमर्हति। न च सत्त्वोत्कर्षं रजस्तमःप्रभवौ विभ्रमविप्रलम्भौ सम्भवतः, तत् सिद्धं प्रकृष्टसत्त्वनिमित्तं शास्त्रमिति। स्यादेतत्—प्रकर्षकार्य्यतया प्रकर्षं बोधयच्छास्त्रं शेषवदनुमानं भवेन्नागमः? इत्यत आह, एतयोः इति।—न कार्य्यत्वेन बोधयति, अपि तु अनादिवाच्यवाचकभावसम्बन्धेन बोधयतीत्यर्थः। ईश्वरस्य हि बुद्धिसत्त्वे प्रकर्षो वर्त्तते, शास्त्रमपि तद्वाचकत्वेन तत्र वर्त्तते इति। उपसंहरति, एतस्मात् इति।—एतस्मात् ईश्वरबुद्धिसत्त्वप्रकर्षवाचकाच्छास्त्रात् एतत् भवति ज्ञायते विषयेण विषयिणो लक्षणात् सदैवेश्वरः सदैव मुक्त इति। तदेवं पुरुषान्तरात् व्यवच्छिद्य ईश्वरान्तरादपि व्यवच्छिनत्ति—तच्च तस्य इति। अतिशयविनिर्मुक्तिमाह—न तावत् इति। कुतः? यदेव इति। कस्मात् सर्वातिशयविनिर्मुक्तं तदैश्वर्य्यम्? इत्यत आह, तस्मात् यत्र इति।—अतिशयनिष्ठामप्राप्तानामौपचारिकमैश्वर्य्यमित्यर्थः। साम्यविनिर्मुक्तिमाह—न च तत्समानम् इति। प्राकाम्यम् अविहतेच्छता, तद्विघातादूनत्वम्, अनूनत्वे वा द्वयोरपि प्राकाम्यविघातः कार्य्यानुत्पत्तेः, उत्पत्तौ वा विरुद्धधर्म्मसमालिङ्गितमेकदा कार्य्यमुपलभ्येतेत्याशयेनाह, द्वयोश्च इति।—अविरुद्धाभिप्रायत्वे च प्रत्येकमीश्वरत्व क्षतम्, अन्येरैकेनैवेशनायाः क्षतत्वात्, सम्भूयकारित्वे वा न कश्चिदीश्वरः परिषद्वत्, नित्येशनायोगिनाञ्च पर्य्यायायोगात्, कल्पनागौरवप्रसङ्गाच्चेति द्रष्टव्यं, तस्मात् सर्वमवदातम् ॥ २४ ॥

एवमस्य क्रियाज्ञानशक्तौ शास्त्रं प्रमाणमभिधाय ज्ञानशक्तावनुमानं प्रमाण

मल्पं बहु इति सर्वज्ञबीजम्। एतद्धि वर्द्धमानं यत्र निरतिशयं स सर्वज्ञः। अस्ति काष्ठाप्राप्तिः सर्वज्ञबीजस्य सातिशयत्वात् परिमाणवदिति। यत्र काष्ठाप्राप्तिः ज्ञानस्य स सर्व्वज्ञः. स च पुरुषविशेष इति, सामान्यमात्रोपसंहारे क्रतोपक्षयम् अनुमानं न विशेषप्रतिपत्तौ समर्थम् इति तस्य संज्ञादिविशेषप्रतिपत्तिरागमतः पर्य्यन्वेष्या। तस्य आत्मानु-

यति—किञ्च इति। तत्र निरतिशयं सर्वज्ञबीजम्। व्याचष्टे, यदिदम् इति।—बुद्धिसत्त्वावरकतमोऽपगमतारतम्येन यदिदमतीतानागतप्रत्युत्पन्नानां प्रत्येकञ्च समुच्चयेन च वर्त्तमानानामतीन्द्रियाणां ग्रहणं तस्य विशेषणमल्पं बह्विति सर्वज्ञबीजं कारणं, कश्चित् किञ्चिदेवातीतादि गृह्णाति कश्चित् बहु कश्चित् बहुतरमिति ग्राह्यापेक्षया ग्रहणस्याल्पत्वं बहुत्वं ज्ञतम्, एतद्धि वर्द्धमानं यत्र निष्क्रान्तमतिशयात् स सर्वज्ञ इति। तदनेन प्रमेयमात्रं कथितम्, अत्र प्रमाण-यति, अस्ति इति।—अस्ति काष्ठाप्राप्तिः सर्व्वज्ञबीजस्य इति साध्यनिर्देशः, निरतिशयत्वं काष्ठा. यतः परमतिशयवत्ता नास्तीति. तेन नावधिमात्रेण सिद्ध-साधनं, सातिशयत्वादिति हेतुः। यत् यत् सातिशयं तत्तत् सर्वं निरतिशयं, यथा कुवलामलकविल्वेषु सातिशयं महत्त्वमात्मनि निरतिशयमिति व्याप्तिं दर्शयति, परिमाणवत् इति।—न च गरिमादिभिर्गुणैर्व्यभिचार इति साम्प्रतम्; न खल्ववयवगरिमाऽतिशयी गरिमाऽवयविनः, किन्तु आपरमाणुभ्यः आ अन्त्या-वयविभ्यो यावन्तः केचन तेषां प्रत्येकवर्त्तिनो गरिम्णः समाहृत्य गरिमवर्द्ध-मानाभिमानः ज्ञानं तु न प्रतिज्ञेयं समाप्यत इत्येकद्विबहुविषयतया युक्तं साति-शयमिति न व्यभिचारः। उपसंहरति—यत्र काष्ठा इति। ननु सन्ति बहवस्तीर्थकरा बुद्धार्हतकपिलर्षिप्रभृतयः, तत् कस्मात् ते एव सर्व्वज्ञा न भवन्ति अस्मादनुमानात्? इत्यत आह—सामान्य इति। कुतस्तर्हि तद्विशेषप्रतिपत्तिः? इत्यत आह, तस्य इति।—बुद्धादिप्रणीत आगमाऽऽभासो न त्वागमः, सर्वप्रमाणबाधित-क्षणिकनैरात्म्यादिमार्गोपदेशकत्वेन विप्रलम्भकत्वादिति भावः। तेन श्रुति-स्मृतीतिहासपुराणलक्षणात् आगमतः आगच्छन्ति बुद्धिमारोहन्ति अस्मादभ्युदय-निःश्रेयसोपाया इत्यागमस्तस्मात् संज्ञादिविशेषप्रतिपत्तिः संज्ञाविशेषः शिवेश्व-रादिः श्रुत्यादिषु प्रसिद्धः, आदिशब्देन षडङ्गता-दशाऽव्ययते सङ्गृहीते; तथोक्तं वायुपुराणे—"सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः। अनन्त-

**ग्रहाभावेऽपि भूतानुग्रहः प्रयोजनं, ज्ञानधर्मोपदेशेन कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति। तथा चोक्तम् "आदिविद्वान्निर्माणचित्तमधिष्ठाय कारुण्याद्भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्रं प्रोवाच" इति ॥ २५ ॥**

शक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥" तथा "ज्ञानं वैराग्यमैश्वर्यं तपः सत्यं क्षमा धृतिः। स्रष्टृत्वमात्मसम्बोधो ह्यधिष्ठातृत्वमेव च॥ अव्ययानि दशैतानि नित्यं तिष्ठन्ति शङ्करे॥" इति। स्यादेतत्, नित्यतृप्तस्य भगवतो वैराग्यातिशयसम्पन्नस्य स्वार्थे तृष्णाऽसम्भवात्, कारुणिकस्य च सुखैकतानसर्जनपरस्य दुःखबहुलजीवलोकजननानुपपत्तेः, अप्रयोजनस्य च प्रेक्षावतः प्रवृत्त्यनुपपत्तेः, क्रियाशक्तिशालिनोऽपि न जगत्क्रिया ? इत्यत आह, तस्यात्मानुग्रहाभावेऽपि इति।—भूतानां प्राणिनामनुग्रहः प्रयोजनं, शब्दाद्युपभोगविवेकख्यातिरूपकार्य्यकरणात् किल चरितार्थं चित्तं निवर्त्तते, ततः पुरुषः कैवली भवति, अतस्तत्प्रयोजनाय कारुणिको विवेकख्यात्युपायं कथयति, तेनाचरितार्थत्वाच्चित्तस्य जन्तूनीश्वरः पुण्यापुण्यसहायः सुखदुःखे भावयन्नपि नाकारुणिकः। विवेकख्यात्युपायकथने द्वारमाह, ज्ञानधर्मोपदेशेन इति।—ज्ञानञ्च धर्मश्च ज्ञानधर्मौ तयोरुपदेशेन, ज्ञानधर्मसमुच्चयाद्धि विवेकख्यातिपरिपाकात् कल्पप्रलये ब्रह्मणो दिवसावसाने, यत्र सत्यलोकवर्जं जगदस्तमेति, महाप्रलये ससत्यलोकस्य ब्रह्मणोऽपि निधने संसारिणः कारणगामिनः, अतस्तदाऽऽमरणदुःखभाजः ; कल्पेत्युपलक्षणम्, अन्यदाऽपि स्वार्जितकर्म्मवशेन जन्ममरणादिभाजः पुरुषानुद्धरिष्यामीति, कैवल्यं प्राप्य पुरुषा उद्धृता भवन्तीत्यर्थः। एतच्च करुणाप्रयुक्तस्य ज्ञानधर्मोपदेशनं कापिलानामपि सिद्धमित्याह, तथा चोक्तम् इति।—पञ्चशिखाचार्य्येण, आदिविद्वान् कपिल इति। आदिविद्वान् इति पञ्चशिखाचार्य्यवचनमादिमुक्तस्वसन्तानादिगुरुविषयं, न त्वनादिमुक्तपरमगुरुविषयम्, आदिमुक्तेषु कदाचिन्मुक्तेषु विद्वत्सु कपिलोऽस्माकमादिविद्वान् मुक्तः, स एव च गुरुरिति। कपिलस्यापि जायमानस्य महेश्वरानुग्रहादेव ज्ञानप्राप्तिः श्रूयत इति, कपिलो नाम विष्णोरवतारविशेषः प्रसिद्धः। स्वयम्भूर्हिरण्यगर्भः, तस्यापि साङ्ख्ययोगप्राप्तिर्वेदे श्रूयते, स एवेश्वर आदिविद्वान् कपिलो विष्णुः स्वयम्भूरिति भावः, स्वायम्भुवानान्त्वीश्वर इति भावः॥ २५॥

स एषः—

**पूर्वेषामपि गुरुः कालेनानवच्छेदात् ॥२६॥**

पूर्वे हि गुरवः कालेन अवच्छेद्यन्ते, यत्रावच्छेदार्थेन कालो नोपावर्त्तते, स एष पूर्वेषामपि गुरुः, यथा अस्य सर्गस्य आदौ प्रकर्षगत्या सिद्धस्तथा अतिक्रान्तसर्गादिषु अपि प्रत्येतव्यः ॥ २६ ॥

**तस्य वाचकः प्रणवः ॥ २७ ॥**

वाच्य ईश्वरः प्रणवस्य। किमस्य सङ्केतकृतं वाच्यवाचकत्वम्? अथ प्रदीपप्रकाशवदवस्थितम्? इति। स्थितोऽस्य वाच्यस्य वाचकेन सह सम्बन्धः, सङ्केतस्तु ईश्वरस्य स्थितमेवार्थम् अभिनयति, यथा अवस्थितः पितापुत्रयोः सम्बन्धः सङ्केतेनाव-

---

सम्प्रति भगवतो ब्रह्मादिभ्यो विशेषमाह—स एष इति। पातनिका स एष इति। सूत्रं, पूर्वेषामपि गुरुः कालेनानवच्छेदात्। व्याचष्टे, पूर्वे हि इति।—कालस्तु शतवर्षादिः, अवच्छेदार्थेन अवच्छेदेन प्रयोजनेन। नोपावर्त्तते न वर्त्तते। प्रकर्षस्य गतिः प्राप्तिः। प्रत्येतव्यः, आगमादिति भावः ॥ २६ ॥

तदनेन प्रबन्धेन भगवानीश्वरो दर्शितः, सम्प्रति तत्प्रणिधानं दर्शयितुं तस्य वाचकमाह—तस्य वाचकः प्रणवः। व्याचष्टे—वाच्य इति। तत्र परेषां मतं विमर्शद्वारेणोपन्यस्यति, किमस्य इति।—वाचकत्वं प्रतिपादकत्वमित्यर्थः। परे हि पश्यन्ति यदि स्वाभाविकः शब्दार्थयोः सम्बन्धः सङ्केतेनास्माच्छब्दादयमर्थः प्रत्येतव्य इत्येवमात्मकेनाभिव्यज्येत ततो यत्र नास्ति स सम्बन्धस्तत्र सङ्केतशतेनापि न व्यज्येत, न हि प्रदीपव्यङ्ग्यो घटो यत्र नास्ति तत्र प्रदीपसहस्रेणापि शक्यो व्यक्तुं, कृतसङ्केतस्तु करभशब्दो वारणे वारणप्रतिपादको दृष्टः, ततः सङ्केतकृतमेव वाचकत्वमिति। विमृश्याभिमतमवधारयति, स्थितोऽस्य इति।—अयमभिप्रायः,—सर्व्व एव शब्दाः सर्वाकारार्थाभिधानसमर्था इति स्थित एवैषां सर्वाकारैरर्थैः स्वाभाविकः सम्बन्धः, ईश्वरसङ्केतस्तु प्रकाशको नियामकश्च तस्य, ईश्वरसङ्केतासङ्केतकृतश्चास्य वाचकापभ्रंशविभागः। तदिदमाह—सङ्केतस्त्वीश्वरस्य इति। निदर्शनमाह—यथा इति। ननु शब्दस्य प्राधानिकस्य महाप्रलयसमये

द्योत्यते अयमस्य पिता अयमस्य पुत्त्र इति; सर्गान्तरेषु अपि वाच्य-वाचकशक्त्यपेक्षस्तथैव सङ्केतः क्रियते ॥ २७ ॥

सम्प्रतिपत्तिनित्यतया नित्यः शब्दार्थसम्बन्ध इत्यागमिनः प्रतिजानते। विज्ञातवाच्य-वाचकत्वस्य योगिनः,—

**तज्जपस्तदर्थभावनम् ॥ २८ ॥**

प्रणवस्य जपः प्रणवाभिधेयस्य चेश्वरस्य भावना। तदस्य योगिनः प्रणवं जपतः प्रणवार्थञ्च भावयतश्चित्तमेकाग्रं सम्पद्यते। तथा चोक्तम्—

स्वाध्यायात् योगमासीत योगात् स्वाध्यायमामनेत्।
स्वाध्याययोगसम्पत्त्या परमात्मा प्रकाशते ॥ २८ ॥ इति।

किञ्चास्य भवति ?

**ततः प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाभावश्च ॥ २९ ॥**

---

प्रधानभावमुपगतस्य शक्तिरपि प्रलीना, ततो महदादिक्रमेणोत्पन्नस्यावाचकस्यैव माहेश्वरेण सङ्केतेन न शक्या वाचकशक्तिरभिज्वलयितुं विनष्टशक्तित्वात् इत्यत आह, सर्गान्तरेष्वपि इति।—यद्यपि सह शक्त्या प्रधानसाम्यमुपगतः शब्दः, तथापि पुनराविर्भवंस्तच्छक्तियुक्त एव आविर्भवति वर्षातिपातसमधिगतमङ्गाव इवोद्भिज्जो मेघविसृष्टवारिधारासारावसेकात्, तेन पूर्वसम्बन्धानुसारेण सङ्केतः क्रियते भगवतेति। तस्मात् सम्प्रतिपत्तेः सदृशव्यवहारपरम्परया नित्यतया नित्यः शब्दार्थयोः सम्बन्धः, न कूटस्थनित्य इत्यागमिकाः प्रतिजानते, न पुनरागमनिरपेक्षाः सर्गान्तरेष्वपि तादृश एव सङ्केत इति प्रतिपत्तुमीशत इति भावः ॥ २७ ॥

वाचकमाख्याय प्रणिधानमाह—तज्जपस्तदर्थभावनम्। व्याचष्टे, प्रणवस्य इति।—भावनं पुनः पुनश्चेतसि निवेशनम्। ततः किं सिध्यति ? इत्यत आह, प्रणवम् इति।—एकाग्रं सम्पद्यते एकस्मिन् भगवति आरमति चित्तम्। अत्रैव वैयासिकीं गाथामुदाहरति, तथाच इति।—ततः ईश्वरः समाधितत्फललाभेन तमनुगृह्णाति ॥ २८ ॥

किञ्चापरमस्मात्। ततः प्रत्यक्चेतनाऽधिगमोऽप्यन्तरायाभावश्च, सूत्रम्।—प्रतीपं

ये तावदन्तराया व्याधिप्रभृतयः, ते तावदीश्वरप्रणिधानान्न भवन्ति, स्वरूपदर्शनमप्यस्य भवति, यथैवेश्वरः पुरुषः शुद्धः प्रसन्नः केवलोऽनुपसर्गस्तथाऽयमपि बुद्धेः प्रतिसंवेदी यः पुरुष इति एवमधिगच्छति ॥ २९ ॥

अथ केऽन्तरायाः? ये चित्तस्य विक्षेपकाः। के पुनस्ते? कियन्तो वा? इति।

**व्याधि-स्त्यान-संशय-प्रमादालस्याविरति-भ्रान्तिदर्शनालब्धभूमिकत्वानवस्थितत्वानि चित्त-विक्षेपास्तेऽन्तरायाः ॥ ३० ॥**

नव अन्तरायाश्चित्तस्य विक्षेपाः, सहैते चित्तवृत्तिभिर्भवन्ति, एतेषामभावे न भवन्ति पूर्वोक्ताश्चित्तवृत्तयः। व्याधिः धातु-

---

विपरीतम्, अञ्चति विजानाति इति प्रत्यक्, स चासौ चेतनश्चेति प्रत्यक्चेतनोऽविद्यावान् पुरुषः, तदनेनेश्वरात् शाश्वतिकसत्त्वोत्कर्षसम्पन्नादविद्यावतो निवर्त्यते। अविद्यावतः प्रतीचश्चेतनस्याधिगमः ज्ञानं स्वरूपतोऽस्य भवति, अन्तराया वक्ष्यमाणास्तदभावश्च। अस्य विवरणं, ये तावत् इति।—स्वम् आत्मा तस्य रूपं, रूपग्रहणेनाविद्यासमारोपितान् धर्मान् निषेधति। ननु ईश्वरप्रणिधानमीश्वरविषयं कथमिव प्रत्यक्चेतनं साक्षात्करोति, अतिप्रसङ्गात्? इत्यत आह, यथैवेश्वर इति।—शुद्धः कूटस्थनित्यतया उदयव्ययरहितः, प्रसन्नः क्लेशवर्ज्जितः, केवलः धर्माधर्मापेतः अत एवानुपसर्गः, उपसर्गा जात्यायुर्भोगाः। साहश्यस्य किञ्चिद्भेदाधिष्ठानत्वादीश्वरात् भिनत्ति, बुद्धेः प्रतिसंवेदी इति।—तदनेन प्रत्यग्ग्रहणं व्याख्यातम्। अत्यन्तविधर्मिणोः अन्यतरार्थानुचिन्तनं न तदितरस्य साक्षात्काराय कल्पते, सदृशार्थानुचिन्तनं तु सदृशान्तरसाक्षात्कारोपयोगितामनुभवति एकशास्त्राभ्यास इव तत्सदृशार्थशास्त्रान्तरज्ञानोपयोगितां, प्रत्यासत्तिस्तु स्वात्मनि साक्षात्कारहेतुर्न परात्मनीति सर्व्वमवदातम् ॥ २९ ॥

पृच्छति—के इति। सामान्येनोत्तरं—ये इति। विशेषसङ्ख्ये पृच्छति—के पुनः इति। उत्तरमाह, व्याधि इत्यादिसूत्रेण।—अन्तरायाः नव एताश्चित्तवृत्तयो

रस-करणवैषम्यम्। स्त्यानम् अकर्मण्यता चित्तस्य। संशयः उभयकोटिस्पृग् विज्ञानं स्यादिदमेवं नैवं स्यादिति। प्रमादः समाधिसाधनानामभावनम्। आलस्यं कायस्य चित्तस्य च गुरुत्वादप्रवृत्तिः। अविरतिः चित्तस्य विषयसंयोगात्मा गर्द्धः। भ्रान्तिदर्शनं विपर्य्ययज्ञानम्। अलब्धभूमिकत्वं समाधिभूमेरलाभः। अनवस्थितत्वं यल्लब्धायां भूमौ चित्तस्य अप्रतिष्ठा, समाधिप्रतिलम्भे हि तदवस्थितं स्यात्, इत्येते चित्त-विक्षेपा नव योगमला योगप्रतिपक्षा योगान्तराया इति अभि-धीयन्ते॥ ३०॥

दुःख-दौर्मनस्याङ्गमेजयत्व-श्वास-प्रश्वासा विक्षेपसहभुवः॥ ३१॥

दुःखम् आध्यात्मिकम्, आधिभौतिकम्, आधिदैविकञ्च।

---

योगान्तराया योगविरोधिनः, चित्तस्य विक्षेपाः चित्तं खल्वमी व्याध्यादयो योगाद्विक्षिपन्ति अपनयन्तीति विक्षेपाः। योगप्रतिपक्षत्वे हेतुमाह, सहैते इति।—संशयभ्रान्तिदर्शने तावद्वृत्तितया वृत्तिनिरोधप्रतिपक्षौ, येऽपि न वृत्तयो व्याध्यादि-प्रभृतयस्तेऽपि वृत्तिसाहचर्य्यात् तत्प्रतिपक्षा इत्यर्थः। पदार्थान् व्याचष्टे, व्याधिः इति।—धातवो वातपित्तश्लेष्माणः शरीरधारणात्, अशितपीताऽऽहार-परिणामविशेषो रसः, करणानि इन्द्रियाणि, तेषां वैषम्यं न्यूनाधिकभाव इति। अकर्म्मण्यता कर्मानर्हता। संशय उभयकोटिस्पृग्विज्ञानं, सत्यप्यतद्-रूपप्रतिष्ठत्वेन संशयविपर्य्यासयोरभेदे उभयकोटिस्पर्शास्पर्शरूपावान्तरविशेष-विवक्षयाऽत्र भेदेनोपन्यासः। अभावनम् अकरणं, तत्राप्रयत्न इति यावत्। कायस्य गुरुत्वं कफादिना, चित्तस्य गुरुत्वं तमसा। गर्द्धः तृष्णा। मधुमत्यादयः समाधिभूमयः, लब्धभूमेर्यदि तावतैव सुस्थितम्मन्यस्य समाधिशेषः स्यात्तत्तस्या अपि भूमेरपायः स्यात्, यस्मात् समाधिप्रतिलम्भे तदवस्थितं स्यात् तस्मात्तत्र प्रयतितव्यमिति॥ ३०॥

न केवलं नव अन्तरायाः, दुःखादयोऽप्यस्य तत्सहभुवो भवन्तीत्याह—दुःख इत्यादि सूत्रम्। प्रतिकूलवेदनीयं दुःखम्, आध्यात्मिकं शारीरं व्याधिवशात्, मानसं

येनाभिहताः प्राणिनस्तदुपघाताय प्रयतन्ते तत् दुःखम्। दौर्मनस्यम् इच्छाभिघाताच्चेतसः क्षोभः। यदङ्गानि एजयति कम्पयति तत् अङ्गमेजयत्वम्। प्राणो यद्बाह्यं वायुम् आचामति स श्वासः, यत्कौष्ठ्यं वायुं निःसारयति स प्रश्वासः। एते विक्षेपसहभुवो विक्षिप्तचित्तस्य भवन्ति, समाहितचित्तस्य एते न भवन्ति ॥ ३१ ॥

अथैते विक्षेपाः समाधिप्रतिपक्षाः ताभ्यामेवाभ्यास-वैराग्याभ्यां निरोद्धव्याः, तत्राभ्यासस्य विषयमुपसंहरन्निदमाह।

**तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः ॥ ३२ ॥**

विक्षेपप्रतिषेधार्थमेकतत्त्वावलम्बनं चित्तमभ्यसेत्। यस्य तु प्रत्यर्थनियतं प्रत्ययमात्रं क्षणिकञ्च चित्तं, तस्य सर्वमेव

---

कामादिवशात्। आधिभौतिकं व्याघ्रादिजनितम्। आधिदैविकं ग्रह-पीड़ादिजनितम्। तच्चेदं दुःखं प्राणिमात्रस्य प्रतिकूलवेदनीयतया हेयमित्याह—येनाभिहता इति। अनिच्छतः प्राणो यद्बाह्यं वायुमाचामति पिबति, प्रवेशयतीति यावत्, स श्वासः समाध्यङ्गरेचकविरोधी। अनिच्छतोऽपि प्राणो यत् कौष्ठ्यं वायुं निःसारयति स प्रश्वासः समाध्यङ्गपूरकविरोधी ॥ ३१ ॥

उक्तार्थोपसंहारसूत्रमवतारयति, अथैत इति।—अथ उक्तार्थानन्तरम्, उप-संहरन्निदं सूत्रमाहेति सम्बन्धः। निरोद्धव्ये हेतुरुक्तः,—समाधिप्रतिपक्षा इति। यद्यपीश्वरप्रणिधानादित्यभ्यासमात्रमुक्तं, तथाऽपि वैराग्यमिह तत्सहकारितया ग्राह्यमित्याह, ताभ्याम् इति।—ताभ्याम् उक्तलक्षणाभ्यामेवाभ्यासवैराग्याभ्यां निरोद्धव्याः। तत्र तयोरभ्यासवैराग्ययोर्मध्ये, अभ्यासस्य अनन्तरोक्तस्येति।

तत्प्रतिषेधार्थमेकतत्त्वाभ्यासः।—एकतत्त्वम् ईश्वरः प्रकृतत्वात् इति। वैनाशिकानां तत् सर्वमेकाग्रमेव चित्तं, नास्ति किञ्चित् विक्षिप्तमिति तदुपदेशानां तदर्थानाञ्च प्रवृत्तीनां वैयर्थ्यमित्याह, यस्य तु इति।—यस्य मते प्रत्यर्थं अर्थमात्रे एकस्मिन्ननेकस्मिन् वा नियतं यावदर्थाभासमुत्पन्नं तत्रैव समाप्तम् अनन्य-गामि। अर्थान्तरं तावत् प्रथमं गृहीत्वाऽर्थान्तरमपि पश्चात् कस्मान्न गृह्णाति? इत्यत आह, क्षणिकञ्च इति।—क्षणस्थायित्वेन पूर्वपश्चाद्भावस्याप्यभावः। अस्मन्मते तु अक्षणिकं चित्तं स्वविषये एकस्मिन्ननेकस्मिन् वाऽनवस्थितं प्रतिक्षणं तत्त-

चित्तमेकाग्रं नास्त्येव विक्षिप्तम्। यदि पुनरिदं सर्व्वतः प्रत्याहृत्य एकस्मिन्नर्थे समाधीयते तदा भवति एकाग्रमिति, अतो न प्रत्यर्थनियतं, योऽपि सदृशप्रत्ययप्रवाहेण चित्तमेकाग्रं मन्यते, तस्य यद्येकाग्रता प्रवाहचित्तस्य धर्मस्तदैकं नास्ति प्रवाहचित्तं क्षणिकत्वात्, अथ प्रवाहांशस्यैव प्रत्ययस्य धर्मः, स सर्वः सदृशप्रत्ययप्रवाही वा विसदृशप्रत्ययप्रवाही वा प्रत्यर्थनियतत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः। तस्मादेकमनेकार्थमवस्थितं चित्तमिति, यदि च चित्तेनैकेनानन्विताः स्वभावभिन्नाः प्रत्ययाः जायेरन्, अथ कथमन्यप्रत्ययदृष्टस्यान्यः स्मर्त्ता भवेत्? अन्यप्रत्ययोपचितस्य च कर्माशयस्यान्यः प्रत्यय उपभोक्ता भवेत्?

---

द्विषयोपादानपरित्यागाभ्यां विषयानियतं विक्षिप्तम्, अतो विक्षेपपरिणाममपनीय शक्यैकाग्रताऽऽधातुमिति तदुपदेशप्रवृत्त्योर्नानर्थक्यमित्याह—यदि पुनः इति। उपसंहरति—अतो न इति। वैनाशिकमुत्थापयति, योऽपि इति।—मा भूदेकस्मिन् क्षणिके चित्ते एकाग्रताऽऽधानप्रयत्नः, चित्तसन्ताने त्वनादावक्षणिके विक्षेपमपनीय एकाग्रताऽऽधास्यत इत्यर्थः। तदेतद्विकल्प्य दूषयति, तस्य इति।—तस्य दर्शने एकाग्रता यदि प्रवाहचित्तस्य चित्तसन्तानस्य वा धर्मः, तदैकं क्रमवदुत्पादेषु प्रत्ययेष्वनुगतं नास्ति प्रवाहचित्तं, कुतः? यत् यावदस्ति तस्य सर्वस्य क्षणिकत्वात्, अक्षणिकस्य चासत्त्वात् भवतां दर्शन इति भावः। द्वितीयं कल्पं गृह्णाति, अथ इति।—सांवृतस्य प्रवाहस्यांशः प्रत्ययः परमार्थः सन् तस्य प्रत्ययस्यैकाग्रता प्रयत्नसाध्यो धर्मः। दूषयति, स सर्व इति।—सांवृतप्रवाहापेक्षया सदृशप्रवाही वा विसदृशप्रवाही वा, अतः परमार्थसत्तारूपेण प्रत्यर्थनियतत्वात् यदर्थाभास उत्पन्नस्तत्र समाप्तत्वादेकाग्र एवेति विक्षिप्तचित्तानुपपत्तिः यदपनयेनैकाग्रताऽऽधीयत इति। उपसंहरति—तस्मात् इति। इतोऽपि चित्तमेकमनेकार्थमवस्थितं चेत्याह, यदि च इति।—यथा हि मैत्रेणाधीतस्य शास्त्रस्य न चैत्रः स्मर्त्ता, यथा च मैत्रेणोपचितस्य पुण्यस्य पापस्य वा कर्माशयस्य फलं

कथञ्चित् समाधीयमानमप्येतत् गोमयपायसीयं न्यायमाक्षिपति ।

किञ्च स्वात्मानुभवापह्नवः चित्तस्यान्यत्वे प्राप्नोति, कथं यदहमद्राक्षं तत् स्पृशामि, यच्चास्प्राक्षं तत् पश्यामीत्यह-

तदसम्बन्धी चैवो न भोक्ता, एवं प्रत्ययान्तरदृष्टस्य प्रत्ययान्तरं न स्मरेत्, प्रत्ययान्तरोपचितस्य वा कर्माशयस्य फलं न प्रत्ययान्तरमुपभुञ्जीतेत्यर्थः ।

ननु नातिप्रसज्यते कार्य्यकारणभावे सतीति विशेषणात्, श्राद्धवैश्वानरीयेष्ट्यादावकर्त्तृमातृपितृपुत्रादिगामिफलदर्शनात्, मधुररसभावितानां वा आम्रबीजादीनां परम्परया फलमाधुर्य्यनियमात् ? इत्यत आह, कथञ्चित् समाधीयमानमप्येतत् इति ।— अयमभिसन्धिः, कः खल्वेकसन्तानवर्त्तिनां प्रत्ययानां सन्तानान्तरवर्त्तिभ्यः प्रत्ययेभ्यो विशेषः, येनैकसन्तानवर्त्तिना प्रत्ययेनानुभूतस्योपचितस्य कर्माशयस्य वा तत्सन्तानवर्त्त्येव प्रत्ययः स्मर्त्ता भोक्ता च स्यात् नान्यसन्तानवर्त्ती ? न हि सन्तानी नामास्ति कश्चिद्वस्तु सत्, य एनं सन्तानिनं सन्तानान्तरवर्त्तिभ्यो भिन्द्यात्, न च काल्पनिको भेदः क्रियायामुपपद्यते, न खलु कल्पिताग्निभावो माणवकः पचति, न च कार्य्यकारणसम्बन्धोऽपि वास्तवः, सहभुवोः सव्येतरविषाणयोरिवाभावात्, असहभुवोरपि प्रत्युत्पन्नाश्रयत्वायोगात्, न हि अतीतानागतौ व्यासज्य प्रत्युत्पन्नं वर्त्तितुमर्हतः, तस्मात् सन्तानेन वा कार्य्यकारणभावेन वा स्वाभाविकेनानुपहिताः परमार्थसन्तः प्रत्ययाः परस्परासंस्पर्शित्वेन स्वसन्तानवर्त्तिभ्यः परसन्तानवर्त्तिभ्यो वा प्रत्ययान्तरेभ्यो न भिद्यन्ते, सोऽयं गोमयं पायसञ्चाधिकृत्य प्रवृत्तो न्यायो गोमयं पायसं गव्यत्वादुभयसिद्धपायसवत् इति तमाक्षिपति न्यायाऽऽभासत्वेन ततोऽप्यधिकत्वादिति । न चात्र कृतनाशाकृताभ्यागमं चोद्यं, यतश्चित्तमेव कर्मणां कर्त्तृ, तदेव तज्जनिताभ्यां सुखदुःखाभ्यां युज्यते, सुखदुःखे च चितिच्छायापन्नं चित्तं भुङ्क्ते इति पुरुषे भोगाभिमानः चितिचित्तयोरभेदग्रहादिति । स्वप्रत्ययं प्रतीत्य समुत्पन्नानां स्वभाव एवैषां तादृशो यत् त एव स्मरन्ति, फलञ्च उपभुञ्जते, न त्वन्ये, न च स्वभावा नियोगपर्य्यनुयोगावर्हन्ति एवं भवतु, मैवं भूदिति वा, कस्मान्नैवम् इति वा इति ।

यः पूर्वोक्ते न परितुष्यति तं प्रत्याह, किञ्च स्वात्मा इति ।— उदयव्यय-धर्माणामनुभवानामनुभवस्मृतीनाञ्च न नानात्वेऽपि तदाश्रयमभिन्नं चित्तमहमिति प्रत्ययः प्रतिसन्दधानः कथमत्यन्तभिन्नान् प्रत्ययाना-

मिति प्रत्ययः ? सर्वस्य प्रत्ययस्य भेदे सति प्रत्ययिनि अभेदेनोपस्थितः एकप्रत्ययविषयोऽयमभेदात्माऽहमिति प्रत्ययः ? कथमत्यन्तभिन्नेषु चित्तेषु वर्त्तमानः सामान्यमेकं प्रत्ययिनमाश्रयेत् स्वानुभवग्राह्यश्चायमभेदात्माऽहमिति प्रत्ययः ? न च प्रत्यक्षस्य माहात्म्यं प्रमाणान्तरेणाभिभूयते, प्रमाणान्तरञ्च प्रत्यक्षबलेनैव व्यवहारं लभते, तस्मादेकमनेकार्थमवस्थितञ्च चित्तम् ॥ ३२ ॥

यस्य चित्तस्य अवस्थितस्य इदं शास्त्रेण परिकर्म्म निर्दिश्यते तत् कथम् ?

**मैत्री-करुणा-मुदितोपेक्षाणां सुख-दुःख-पुण्यापुण्यविषयाणां भावनातश्चित्तप्रसादनम् ॥ ३३ ॥**

तत्र सर्वप्राणिषु सुखसम्भोगापन्नेषु मैत्रीं भावयेत्, दुःखितेषु करुणां, पुण्यात्मकेषु मुदिताम्, अपुण्यात्मकेषु उपेक्षाम्, एवमस्य भावयतः शुक्लो धर्म्म उपजायते, ततश्च चित्तं प्रसीदति, प्रसन्नमेकाग्रं स्थितिपदं लभते ॥ ३३ ॥

---

लभेत ? ननु ग्रहणस्मरणरूपकारणभेदात् पारोक्ष्याऽपरोक्ष्यरूपविरुद्धधर्मसंसर्गाद्वा न प्रत्यभिज्ञानं नामैकः प्रत्ययः, यतः प्रत्ययिनश्चित्तस्यैकता स्यात् ? इत्यत आह— स्वानुभव इति। ननु कारणभेदविरुद्धधर्मसंसर्गावेव बाधकावुक्तावित्यत आह, न च प्रत्यक्षस्य इति।—प्रत्यक्षानुसारत एव सामग्र्यभेदः, पारोक्ष्याऽपरोक्ष्यधर्माविरुद्धश्चोपपादितो न्यायकणिकायाम्। अक्षणिकस्य चार्थक्रिया न्यायकणिकाब्रह्मतत्त्वसमीक्षाभ्यामुपपादितेति सर्वमवदातम् ॥ ३२ ॥

अपरिकर्मितमनसोऽसूयादिमतः समाधि-तदुपायसम्पत्त्यनुत्पादाच्चित्तप्रसादनोपायानसूयादिविरोधिनः प्रतिपादयितुमुपक्रमते, यस्येदम् इति।—यस्य चित्तस्यावस्थितस्येदं परिकर्मेत्यर्थः। मैत्रीकरुणेत्यादि प्रसादनेत्यन्तं सूत्रम्।—सुखितेषु मैत्रीं सौहार्दं भावयत ईर्ष्याकालुष्यं निवर्त्तते चित्तस्य। दुःखितेषु च करुणाम् आत्मनीव परस्मिन् दुःखप्रहाणेच्छां भावयतः परापकारचिकीर्षा-

प्रच्छर्दन-विधारणाभ्यां वा प्राणस्य ॥ ३४ ॥

कौष्ठस्य वायोर्नासिकापुटाभ्यां प्रयत्नविशेषात् वमनं प्रच्छर्दनं, विधारणं प्राणायामः, ताभ्यां वा मनसः स्थितिं सम्पादयेत् ॥ ३४ ॥

विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थिति-निबन्धनी ॥ ३५ ॥

नासिकाऽग्रे धारयतोऽस्य या दिव्यगन्धसंवित् सा गन्ध-प्रवृत्तिः, जिह्वाग्रे रससंवित्, तालुनि रूपसंवित्, जिह्वा-मध्ये स्पर्शसंवित्, जिह्वामूले शब्दसंवित्, इत्येताः प्रवृत्तयः

---

कालुष्यं चेतसो निवर्त्तते। पुण्यशीलेषु प्राणिषु मुदितां हर्षं भावयतोऽसूया-कालुष्यं निवर्त्तते चेतसः। अपुण्यशीलेषु चोपेक्षां माध्यस्थ्यं भावयतोऽमर्षकालुष्यं निवर्त्तते। ततश्चास्य राजसतामसधर्मनिवृत्तौ सात्त्विकः शुक्लो धर्म उपजायते, सत्त्वोत्कर्षसम्पन्नः सम्भवति, वृत्तिनिरोधपक्षे तस्य प्रसादस्वाभाव्याच्चित्तं प्रसीदति, प्रसन्नञ्च वक्ष्यमाणेभ्य उपायेभ्य एकाग्रं स्थितिपदं लभते, असत्यां पुनर्मैत्र्यादि-भावनायां न ते उपायाः स्थित्यै कल्पन्त इति भावः ॥ ३३ ॥

तानिदानीं स्थित्युपायानाह, प्रच्छर्दनविधारणाभ्यां वा प्राणस्य।—वा शब्दो वक्ष्यमाणोपायान्तरापेक्षो विकल्पार्थः, न मैत्र्यादिभावनाऽपेक्षया, तया सह समुच्चयात्।

प्रच्छर्दनं विवृणोति, कौष्ठस्य इति।—प्रयत्नविशेषात् योगशास्त्रोक्तात्, येन कौष्ठो वायुर्नासिकापुटाभ्यां शनैः रेच्यते। विधारणं विवृणोति, विधारणं प्राणायाम इति।—रेचितस्य प्राणस्य कौष्ठस्य वायोर्यदायामो बहिरेव स्थापनं न तु सहसा प्रवेशनम्। तदेताभ्यां प्रच्छर्दनविधारणाभ्यां वायोर्लघूकृतशरीरस्य मनः स्थितिपदं लभते। अत्र चोत्तरसूत्रगतात् स्थितिनिबन्धनीतिपदात् स्थितिग्रहणमाकृष्य सम्पादयेदित्यर्थ-प्राप्तेन सम्बन्धनीयम् ॥ ३४ ॥

स्थित्युपायान्तरमाह—विषयवती वा प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनी। व्याचष्टे, नासिकाग्रे धारयत इति।—धारणाध्यानसमाधीन् कुर्वतस्तज्जयात् या

उत्पन्नाश्चित्तं स्थितौ निबध्नन्ति, संशयं विधमन्ति, समाधिप्रज्ञायाञ्च द्वारीभवन्ति इति। एतेन चन्द्रादित्यग्रहमणिप्रदीपरश्म्यादिषु प्रवृत्तिरुत्पन्ना विषयवत्येव वेदितव्या। यद्यपि हि तत्तच्छास्त्रानुमानाचार्य्योपदेशैरवगतमर्थतत्त्वं सद्भूतमेव भवति एतेषां यथाभूतार्थप्रतिपादनसामर्थ्यात् तथाऽपि यावदेकदेशोऽपि कश्चिन्न स्वकरणसंवेद्यो भवति, तावत् सर्व्वं परोक्षमिवापवर्गादिषु सूक्ष्मेषु अर्थेषु न दृढ़ां बुद्धिमुत्पादयति।

तस्माच्छास्त्रानुमानाचार्य्योपदेशोपोद्वलनार्थमेवावश्यं कश्चित् विशेषः प्रत्यक्षीकर्त्तव्यः, तत्र तदुपदिष्टार्थैकदेशप्रत्यक्षत्वे सति सर्व्वं सुसूक्ष्मविषयमप्यपवर्गात् सुश्रद्धीयते, एतदर्थमेवेदं चित्तपरिकर्म्म निर्दिश्यते, अनियतासु वृत्तिषु तद्विषयायां वशीकारसंज्ञायामुपजातायां समर्थं स्यात्तस्य तस्य अर्थस्य प्रत्यक्षीकरणायेति, तथा च सति श्रद्धावीर्य्यस्मृतिसमाधयोऽस्याप्रतिबन्धेन भविष्यन्तीति॥ ३५॥

विशोका वा ज्योतिष्मती॥ ३६॥

प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनीत्यनुवर्त्तते। हृदय-

---

दिव्यगन्धसंवित् तत्साक्षात्कारः; एवमन्यास्वपि प्रवृत्तिषु योज्यम्। एतच्चागमात् प्रत्येतव्यं नोपपत्तितः। स्यादेतत्, किमेताद्दृग्भिर्वृत्तिभिः कैवल्यं प्रत्यनुपयोगिनीभिः? इत्यत आह, एता इति।—एता वृत्तयोऽल्पेनैव कालेनोत्पन्नाश्चित्तमीश्वरविषयायां वा विवेकख्यातिविषयायां वा स्थितौ निबध्नन्ति। नन्वन्यविषया वृत्तिः कथमन्यत्र स्थितिं निबध्नाति? इत्यत आह, संशयं विधमन्ति इति।—विधमन्ति अपसारयन्ति। अत एव समाधिप्रज्ञायामिति। वृत्त्यन्तराणामप्यागमसिद्धानां विषयवत्त्वमतिदिशति—एतेन इति। नन्वागमादिभिरवगतेष्वर्थेषु कुतः संशयः? इत्यत आह, यद्यपि हि इति।—श्रद्धामूलो हि योगः, उपदिष्टार्थैकदेशप्रत्यक्षीकरणे च श्रद्धाऽतिशयो जायते, तन्मूलाश्च ध्यानादयोऽस्याप्रत्यूहं भवन्तीत्यर्थः॥ ३५॥

विशोका वा ज्योतिष्मती।—विगतशोका दुःखरहिता। ज्योतिष्मती

पुण्डरीके धारयतो या बुद्धिसंवित्,—बुद्धिसत्त्वं हि भास्वर-माकाशकल्पं, तत्र स्थितिवैशारद्यात् प्रवृत्तिः सूर्य्येन्दुग्रह-मणिप्रभारूपाकारेण विकल्पते, तथाऽस्मितायां समापन्नं चित्तं निस्तरङ्गमहोदधिकल्पं शान्तमनन्तमस्मितामात्रं भवति, यत्रेदमुक्तं "तमणुमात्रमात्मानमनुविद्यास्मीत्येवं तावत् सम्प्रजानीते" इति। एषा द्वयी विशोका · विषयवती। अस्मितामात्रा च प्रवृत्तिर्ज्योतिष्मतीति उच्यते, यया योगिनश्चित्तं स्थितिपदं लभत इति॥ ३६॥

ज्योतिरस्या अस्तीति ज्योतिष्मती प्रकाशरूपा। हृदयपुण्डरीक इति।—उदरोरसोर्मध्ये यत्पद्ममधोमुखं तिष्ठति अष्टदलं, रेचकप्राणायामेन तदूर्द्धमुखं कृत्वा तत्र चित्तं धारयेत्। तन्मध्ये सूर्य्यमण्डलमकारो जागरितस्थानं, तस्यो-परि चन्द्रमण्डलमुकारः स्वप्नस्थानं, तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानं, तस्योपरि परं व्योमात्मकं ब्रह्मनादं तुरीयस्थानमर्द्धमात्रमुदाहरन्ति ब्रह्मवादिनः, तत्र कर्णिकायामूर्द्धमुखी सूर्य्यादिमण्डलमध्यगा ब्रह्मनाड़ी, ततोऽप्यूर्द्धं प्रवृत्ता सुषुम्ना नाम नाड़ी, तया खलु वाह्यान्यपि सूर्य्यादीनि मण्डलानि प्रोतानि, सा हि चित्तस्थानं, तस्यां धारयतो योगिनश्चित्तसंविदुपजायते। उपपत्तिपूर्व्वकं बुद्धिसंविद आकारमादर्शयति, बुद्धिसत्त्वं हि इति।—आकाशकल्पमिति व्यापितामाह। सूर्य्यादीनां प्रभास्तासां रूपं तदाकारेण विकल्पते नानारूपा भवति। मनश्चात्र बुद्धिरभिमतं, न तु महत्तत्त्वं, तस्य च सुषुम्नास्थस्य वैका-रिकाहङ्कारजन्मनः सत्त्वबहुलतया ज्योतीरूपता विवक्षिता, तत्तद्विषयगोचर-तया च व्यापित्वमपि सिद्धम्। अस्मिताकार्य्ये मनसि सम्पत्तिं दर्शयित्वाऽस्मिता-समापत्तेः स्वरूपमाह, तथाऽस्मितायाम् इति।—शान्तम् अपगतरजस्तरङ्गम्, अनन्तं व्यापि, अस्मितामात्रं न पुनर्नानाप्रभारूपम्। आगमान्तरेण स्वमतं संवी-करोति, यत्र इति।—यत्रेदमुक्तं पञ्चशिखेन, तमणुं दुरधिगमत्वात्, आत्मानम् अहङ्कारास्पदम्, अनुविद्य अनुचिन्त्य, अस्मीत्येवं तावज्जानीत इति। स्यादेतत्, नानाप्रभारूपा भवतु ज्योतिष्मती, कथमस्मितामात्ररूपा ज्योतिष्मती? इत्यत आह, एषा द्वयी इति।—विधूतरजस्तमोमलाऽस्मितैव सत्त्वमयी ज्योतिरिति भावः। द्विविधाया अपि ज्योतिष्मत्याः फलमाह—यया इति॥ ३६॥

उत्पन्नाश्चित्तं स्थितौ निबध्नन्ति, संशयं विधमन्ति, समाधिप्रज्ञायाञ्च द्वारीभवन्ति इति। एतेन चन्द्रादित्यग्रहमणिप्रदीपरश्म्यादिषु प्रवृत्तिरुत्पन्ना विषयवत्येव वेदितव्या। यद्यपि हि तत्तच्छास्त्रानुमानाचार्य्योपदेशैरवगतमर्थतत्त्वं सद्भूतमेव भवति एतेषां यथाभूतार्थप्रतिपादनसामर्थ्यात् तथाऽपि यावदेकदेशोऽपि कश्चिन्न स्वकरणसंवेद्यो भवति, तावत् सर्व्वं परोक्षमिवापवर्गादिषु सूक्ष्मेषु अर्थेषु न दृढ़ां बुद्धिमुत्पादयति।

तस्माच्छास्त्रानुमानाचार्य्योपदेशोपोद्बलनार्थमेवावश्यं कश्चित् विशेषः प्रत्यक्षीकर्त्तव्यः, तत्र तदुपदिष्टार्थैकदेशप्रत्यक्षत्वे सति सर्व्वं सुसूक्ष्मविषयमप्यपवर्गात् सुश्रद्धीयते, एतदर्थमेवेदं चित्तपरिकर्म्म निर्दिश्यते, अनियतासु वृत्तिषु तद्विषयायां वशीकारसंज्ञायामुपजातायां समर्थं स्यात्तस्य तस्य अर्थस्य प्रत्यक्षीकरणायेति, तथा च सति श्रद्धावीर्य्यस्मृतिसमाधयोऽस्याप्रतिबन्धेन भविष्यन्तीति ॥ ३५ ॥

**विशोका वा ज्योतिष्मती ॥ ३६ ॥**

प्रवृत्तिरुत्पन्ना मनसः स्थितिनिबन्धनीत्यनुवर्त्तते। हृदय-

---

दिव्यगन्धसंवित् तत्साक्षात्कारः; एवमन्यास्वपि प्रवृत्तिषु योज्यम्। एतच्चागमात् प्रत्येतव्यं नोपपत्तितः। स्यादेतत्, किमेताभिर्वृत्तिभिः कैवल्यं प्रत्यनुपयोगिनीभिः? इत्यत आह, एता इति।—एता वृत्तयोऽल्पेनैव कालेनोत्पन्नाश्चित्तमीश्वरविषयायां वा विवेकख्यातिविषयायां वा स्थितौ निबध्नन्ति। नन्वन्यविषया वृत्तिः कथमन्यत्र स्थितिं निबध्नाति? इत्यत आह, संशयं विधमन्ति इति।—विधमन्ति अपसारयन्ति। अत एव समाधिप्रज्ञायामिति। वृत्त्यन्तराणामप्यागमसिद्धानां विषयवत्त्वमतिदिशति—एतेन इति। नन्वागमादिभिरवगतेष्वर्थेषु कुतः संशयः? इत्यत आह, यद्यपि हि इति।—श्रद्धामूलो हि योगः, उपदिष्टार्थैकदेशप्रत्यक्षीकरणे च श्रद्धाऽतिशयो जायते, तन्मूलाश्च ध्यानादयोऽस्याप्रत्यूहं भवन्तीत्यर्थः ॥ ३५ ॥

विशोका वा ज्योतिष्मती।—विगतशोका दुःखरहिता। ज्योतिष्मती

पुण्डरीके धारयतो या बुद्धिसंवित्,—बुद्धिसत्त्वं हि भास्वरमाकाशकल्पं, तत्र स्थितिवैशारद्यात् प्रवृत्तिः सूर्य्येन्दुग्रहमणिप्रभारूपाकारेण विकल्पते, तथाऽस्मितायां समापन्नं चित्तं निस्तरङ्गमहोदधिकल्पं शान्तमनन्तमस्मितामात्रं भवति, यत्रेदमुक्तं "तमणुमात्रमात्मानमनुविद्यास्मीत्येवं तावत् सम्प्रजानीते" इति। एषा द्वयी विशोका विषयवती अस्मितामात्रा च प्रवृत्तिर्ज्योतिष्मतीति उच्यते, यया योगिनश्चित्तं स्थितिपदं लभत इति॥ ३६ ॥

ज्योतिरस्या अस्तीति ज्योतिष्मती प्रकाशरूपा। हृदयपुण्डरीक इति।—उदरोरसोर्मध्ये यत्पद्ममधोमुखं तिष्ठति अष्टदलं, रेचकप्राणायामेन तदूर्द्ध्वमुखं कृत्वा तत्र चित्तं धारयेत्। तन्मध्ये सूर्य्यमण्डलमकारो जागरितस्थानं, तस्योपरि चन्द्रमण्डलमुकारः स्वप्नस्थानं, तस्योपरि वह्निमण्डलं मकारः सुषुप्तिस्थानं, तस्योपरि परं व्योमात्मकं ब्रह्मनादं तुरीयस्थानमर्द्धमात्रमुदाहरन्ति ब्रह्मवादिनः, तत्र कर्णिकायामूर्द्ध्वमुखी सूर्य्यादिमण्डलमध्यगा ब्रह्मनाड़ी, ततोऽप्यूर्द्ध्वं प्रवृत्ता सुषुम्ना नाम नाड़ी, तया खलु वाह्यान्यपि सूर्य्यादीनि मण्डलानि प्रोतानि, सा हि चित्तस्थानं, तस्यां धारयतो योगिनश्चित्तसंविदुपजायते। उपपत्तिपूर्व्वकं बुद्धिसंविद आकारमादर्शयति, बुद्धिसत्त्वं हि इति।—आकाशकल्पमिति व्यापितामाह। सूर्य्यादीनां प्रभास्तासां रूपं तदाकारेण विकल्पते नानारूपा भवति। मनश्चात्र बुद्धिरभिमतं, न तु महत्तत्त्वं, तस्य च सुषुम्नाश्रयस्य वैकारिकाहङ्कारजन्मनः सत्त्वबहुलतया ज्योतीरूपता विवक्षिता, तत्तद्विषयगोचरतया च व्यापित्वमपि सिद्धम्। अस्मिताकार्य्ये मनसि सम्पत्तिं दर्शयित्वाऽस्मितासमापत्तेः स्वरूपमाह, तथाऽस्मितायाम् इति।—शान्तम् अपगतरजस्तरङ्गम्, अनन्तं व्यापि, अस्मितामात्रं न पुनर्नानाप्रभारूपम्। आगमान्तरेण स्वमतं समीकरोति, यत्र इति।—यत्रेदमुक्तं पञ्चशिखेन, तमणुं दुरधिगमत्वात्, आत्मानम् अहङ्कारास्पदम्, अनुविद्य अनुचिन्त्य, अस्मीत्येवं तावज्जानीत इति। स्यादेतत्, नानाप्रभारूपा भवतु ज्योतिष्मती, कथमस्मितामात्ररूपा ज्योतिष्मती? इत्यत आह, एषा द्वयी इति।—विधूतरजस्तमोमलाऽस्मितेव सत्त्वमयी ज्योतिरिति भावः। द्विविधाया अपि ज्योतिष्मत्याः फलमाह—यया इति॥ ३६ ॥

**वीतरागविषयं वा चित्तम् ॥ ३७ ॥**

वीतरागचित्तालम्बनोपरक्तं वा योगिनश्चित्तं स्थितिपदं लभत इति ॥ ३७ ॥

**स्वप्ननिद्राज्ञानालम्बनं वा ॥ ३८ ॥**

स्वप्नज्ञानालम्बनं निद्राज्ञानालम्बनं वा तदाकारं योगिनश्चित्तं स्थितिपदं लभत इति ॥ ३८ ॥

**यथाऽभिमतध्यानाद्वा ॥ ३९ ॥**

यदेवाभिमतं तदेव ध्यायेत्। तत्र लब्धस्थितिकमन्यत्रापि स्थितिपदं लभत इति ॥ ३९ ॥

**परमाणु-परममहत्त्वान्तोऽस्य वशीकारः ॥४०॥**

सूक्ष्मे निविशमानस्य परमाण्वन्तं स्थितिपदं लभत इति। स्थूले निविशमानस्य परममहत्त्वान्तं स्थितिपदं चित्तस्य। एवं तामुभयीं कोटिमनुधावतो योऽस्याप्रति-

---

वीतरागविषयं वा चित्तम्। वीतरागाः कृष्णद्वैपायनप्रभृतयस्तेषां चित्तं तदेवाऽऽलम्बनं तेनोपरक्तमिति ॥ ३७ ॥

स्वप्ननिद्राज्ञानालम्बनं वा। यदा खल्वयं स्वप्ने विविक्तवनसन्निवेशवर्त्तिनीम्, उत्कीर्णामिव चन्द्रमण्डलात्, कोमलमृणालशकलानुकारिभिरङ्गप्रत्यङ्गैरुपेताम्, अभिजातचन्द्रकान्तमणिमयीम्, अतिसुरभिमालतीमल्लिकामालाहारिणीं, मनोहरां, भगवतो महेश्वरस्य प्रतिमामाराधयन्नेव प्रबुद्धः प्रसन्नमनास्तदा तामेव स्वप्नज्ञानावलम्बनीभूतामनुचिन्तयतस्तस्य तदेकाकारमनसस्तत्रैव चित्तं स्थितिपदं लभते। निद्रा चेह सात्त्विकी ग्रहीतव्या, यस्याः प्रबुद्धस्य सुखमहमस्वाप्समिति प्रत्यवमर्शो भवति, एकाग्रं हि तस्यां मनो भवति, तावन्मात्रेण चोक्तम्, एतदेव ब्रह्मविदो ब्रह्मणो रूपमुदाहरन्ति सुषुप्तावस्थेति ज्ञानञ्च ज्ञेयरहितं न शक्यं गोचरयितुमिति ज्ञेयमपि गोचरीक्रियते ॥ ३८ ॥

यथाऽभिमतध्यानाद्वा। किं बहुना, यदेवाभिमतं तत्तत् देवतारूपमिति ॥ ३९ ॥

कथं पुनः स्थितिपदमात्मीभावोऽवगन्तव्यः? इत्यत आह—परमाणुपरम-

ष्यातः स परो वशीकारः, तद्वशीकारात् परिपूर्णं योगिनश्चित्तं न पुनरभ्यासकृतं परिकर्मापेक्षत इति ॥ ४० ॥

अथ लब्धस्थितिकस्य चेतसः किंस्वरूपा किंविषया वा समापत्तिः ? इति।

तदुच्यते—

**क्षीणवृत्तेरभिजातस्येव मणेर्ग्रहीतृग्रहणग्राह्येषु तत्स्थ-तदञ्जनतासमापत्तिः ॥ ४१ ॥**

क्षीणवृत्तेरिति प्रत्यस्तमितप्रत्ययस्येत्यर्थः। अभिजातस्येव मणेः इति दृष्टान्तोपादानम्। यथा स्फटिक उपाश्रयभेदात्तत्तद्रूपोपरक्त उपाश्रयरूपाकारेण निर्भासते, तथा ग्राह्यालम्बनोपरक्तं चित्तं ग्राह्यसमापन्नं ग्राह्यस्वरूपाकारेण निर्भासते, भूतसूक्ष्मोपरक्तं भूतसूक्ष्मसमापन्नं भूतसूक्ष्मस्वरूपाभासं भवति, तथा स्थूलालम्बनोपरक्तं स्थूलरूपसमापन्नं

---

महत्त्वान्तोऽस्य वशीकारः। व्याचष्टे—सूक्ष्म इति। उक्तमर्थं पिण्डीकृत्य वशीकारपदार्थमाह—एवं तामुभयीम् इति। वशीकारस्यावान्तरफलमाह—तद्वशीकारात् इति ॥ ४० ॥

तदेवं चित्तस्थितेरुपाया दर्शिताः, लब्धस्थितिकस्य वशीकारोऽपि दर्शितः, सम्प्रति लब्धस्थितिकस्य चेतसः किंविषयः किंरूपश्च सम्प्रज्ञातो भवति ? इति पृच्छति—अथ इति।

अत्रोत्तरसूत्रमवतारयति—तदुच्यत इति। सूत्रं पठति—क्षीणवृत्तेरित्यादिसमापत्त्यन्तम्। तद्व्याचष्टे, क्षीण इति।—अभ्यासवैराग्याभ्यां क्षीणराजसतामसप्रमाणादिवृत्तेश्चितस्य। तस्य व्याख्यानं—प्रत्यस्तमितप्रत्ययस्य इति। तदनेन चित्तसत्त्वस्य स्वभावस्वच्छस्य रजस्तमोभ्यामनभिभव उक्तः। दृष्टान्तं स्पष्टयति, यथा इति।—उपाश्रय उपाधिः जपाकुसुमादिः, उपरक्तः तच्छायापन्नः, उपाश्रयस्य यदात्मीयं रूपं लोहितनीलादि, तदेवाकारस्तेन लक्षितो निर्भासते। दार्ष्टान्तिके योजयति, तथा ग्राह्य इति।—ग्राह्यञ्च तदालम्बनञ्च तेनोपरक्तं तदनुविद्धं, तदनेन ग्रहीतृग्रहणाभ्यां व्यवच्छिनत्ति, आत्मीयमन्तःकरणरूपमपिधाय ग्राह्य-

स्थूलरूपाभासं भवति, तथा विश्वभेदोपरक्तं विश्वभेदसमापन्नं विश्वरूपाभासं भवति, तथा ग्रहणेष्वपि इन्द्रियेष्वपि द्रष्टव्यं, ग्रहणालम्बनोपरक्तं ग्रहणसमापन्नं ग्रहणस्वरूपाकारेण निर्भासते, तथा ग्रहीतृपुरुषालम्बनोपरक्तं ग्रहीतृपुरुषसमापन्नं ग्रहीतृपुरुषस्वरूपाकारेण निर्भासते, तथा मुक्तपुरुषालम्बनोपरक्तं मुक्तपुरुषसमापन्नं मुक्तपुरुषस्वरूपाकारेण निर्भासते, तदेवमभिजातमणिकल्पस्य चेतसो ग्रहीतृग्रहणग्राह्येषु पुरुषेन्द्रियभूतेषु या तत्स्थ-तदञ्जनता तेषु स्थितस्य तदाकारापत्तिः, सा समापत्तिरित्युच्यते ॥ ४१ ॥

**तत्र शब्दार्थज्ञानविकल्पैः सङ्कीर्णा सवितर्का समापत्तिः ॥ ४२ ॥**

---

समापन्नं ग्राह्यतामिव प्राप्तमिति यावत्, अतो ग्राह्यस्वरूपाकारेण निर्भासते। ग्राह्योपरागमेव सूक्ष्मस्थूलताभ्यां विभजते—भूतसूक्ष्म इति। विश्वभेदश्चेतनाचेतनस्वभावो गवादिर्घटादिश्च द्रष्टव्यः। तदनेन वितर्कविचारानुगतौ समाधी दर्शितौ। तथा ग्रहणेषु अपीन्द्रियेषु इति।—गृह्यन्त एभिरर्था इति ग्रहणानीन्द्रियाणि। एतदेव स्पष्टयति, ग्रहणालम्बन इति।—ग्रहणं चालम्बनञ्च तत् इति ग्रहणालम्बनं, तेनोपरक्तम् अनुविद्धम्, आत्मीयमन्तःकरणरूपमपिधाय ग्रहणमिव वहिःकरणमिवापन्नमिति। तदनेनानन्दानुगतमुक्त्वाऽस्मितानुगतमाह, तथा ग्रहीतृपुरुष इति।—अस्मिताऽऽस्पदं हि ग्रहीता पुरुष इति भावः। पुरुषत्वाविशेषादनेनैव-मुक्तोऽपि पुरुषः शुकप्रह्लादादिः समाधिविषयतया सङ्ग्रहीतव्य इत्याह—तथा मुक्त इति। उपसंहरन् तत्स्थतदञ्जनतापदं व्याचष्टे, तदेवम् इति।—तेषु ग्रहीतृग्रहणग्राह्येषु, स्थितस्य धारितस्य, ध्यानपरिपाकवशादपहृतरजस्तमोमलस्य चित्तसत्त्वस्य, या तदञ्जनता तदाकारता, सा समापत्तिः सम्प्रज्ञातलक्षणो योग उच्यते। तत्र च ग्रहीतृग्रहणग्राह्येष्विति सौत्रः पाठक्रमोऽर्थक्रमविरोधान्नादर्त्तव्यः, एवं भाष्येऽपि प्रथमं भूतसूक्ष्मोपन्यासोऽप्यनादरणीय इति सर्वं रमणीयम् ॥ ४१ ॥

सामान्यतः समापत्तिरुक्ता, सेयमवान्तरभेदाच्चतुर्विधा भवति, तद्यथा, सवितर्का, निर्वितर्का, सविचारा, निर्विचारा चेति। तत्र सवितर्कायाः सम-

तत् यथा गौरिति शब्दो गौरित्यर्थः गौरिति ज्ञानम् इत्यविभागेन विभक्तानामपि ग्रहणं दृष्टम्। विभज्यमानाश्चान्ये शब्दधर्मा अन्ये अर्थधर्मा अन्ये विज्ञानधर्मा इत्येतेषां विभक्तः पन्थाः। तत्र समापन्नस्य योगिनो यो गवाद्यर्थः समाधिप्रज्ञायां समारूढ़ः, स चेच्छब्दार्थज्ञानविकल्पानुविद्ध उपावर्त्तते सा सङ्कीर्णा समापत्तिः सवितर्केत्युच्यते ॥ ४२ ॥

यदा पुनः शब्दसङ्केतस्मृतिपरिशुद्धौ श्रुतानुमानविकल्पशून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपाकारमात्रतयैवावच्छिद्यते, सा च निर्वितर्का समा-

---

पत्तेर्लक्षणमाह, तत्र इत्यादि समापत्त्यन्तं सूत्रम्।—तत्र तासु समापत्तिषु मध्ये सवितर्का समापत्तिः प्रत्येतव्या। कीदृशी? शब्दश्चार्थश्च ज्ञानञ्च तेषां विकल्पः वस्तुतो भिन्नानामपि शब्दादीनामितरेतराध्यासात् विकल्पोऽप्येकस्मिन् भेदमादर्शयति भिन्नेषु चाभेदं, तेन शब्दार्थज्ञानविकल्पैः सङ्कीर्णा मिश्रेत्यर्थः। तद्यथा गौः इति शब्द इति।—गौरित्युपात्तयोरर्थज्ञानयोः शब्दाभेदविकल्पो दर्शितः, गौरित्यर्थः इति। गौरित्युपात्तयोः शब्दज्ञानयोरर्थाभेदविकल्पो दर्शितः, गौरिति ज्ञानम् इति।—गौरित्युपात्तयोः शब्दार्थयोर्ज्ञानाभेदविकल्पो दर्शितः, तदेवमविभागेन विभक्तानामपि शब्दार्थज्ञानानां ग्रहणं लोके द्रष्टव्यम्। यद्यविभागेन ग्रहणं, कुतस्तर्हि विभागः? इत्यत आह, विभज्यमानाश्च इति।—विभज्यमानाश्चान्वयव्यतिरेकाभ्यां परीक्षकैः अन्ये शब्दधर्माः ध्वनिपरिणाममात्रस्य शब्दस्योदात्तादयो धर्माः, अन्येऽर्थस्य जड़त्वमूर्त्तत्वादयः, अन्ये प्रकाशमूर्त्तिविरहादयो ज्ञानस्य धर्मा इति; तस्मादेतेषां विभक्तः पन्थाः स्वरूपभेदोन्नयनमार्गः। तत्र विकल्पिते गवाद्यर्थे समापन्नस्येति।—तदनेन योगिनोऽपरं प्रत्यक्षमुक्तं, शेषं सुगमम् ॥ ४२ ॥

सूत्रं योजयितुं प्रथमतस्तावन्निर्वितर्कां व्याचष्टे, यदा पुनः इति।—परिशुद्धिः अपनयः, शब्दसङ्केतस्मरणपूर्वे खल्वागमानुमाने प्रवर्त्तेते, सङ्केतश्चायं गौरितिशब्दार्थज्ञानानामितरेतराध्यासात्मा, ततश्चागमानुमानज्ञानविकल्पौ भवतः तेन तत्पूर्वा समाधिप्रज्ञा सवितर्का। यदा पुनरर्थमात्रप्रवणेन चेतसाऽर्थमात्राऽऽहतेन तदभ्यासान्नान्तरीयकतामुपगता सङ्केतस्मृतिस्त्यक्ता, तत्त्यागे च श्रुतानु-

पत्तिः। तत्परं प्रत्यक्षं, तच्च श्रुतानुमानयोर्बीजं, ततः श्रुतानुमाने प्रभवतः। न च श्रुतानुमानज्ञानसहभूतं तद्दर्शनं, तस्मादसङ्कीर्णं प्रमाणान्तरेण योगिनो निर्वितर्कसमाधिजं दर्शनमिति।

निर्वितर्काया: समापत्तेरस्याः सूत्रेण लक्षणं द्योत्यते—

## स्मृतिपरिशुद्धौ स्वरूपशून्येवार्थमात्रनिर्भासा निर्वितर्का ॥ ४३ ॥

या शब्दसङ्केतश्रुतानुमानज्ञानविकल्पस्मृतिपरिशुद्धौ ग्राह्यस्वरूपोपरक्ता प्रज्ञा स्वमिव प्रज्ञारूपं ग्रहणात्मकं त्यक्त्वा पदार्थमात्रस्वरूपा ग्राह्यस्वरूपापन्नेव भवति, सा निर्वितर्का समापत्तिः। तथा च व्याख्याता, तस्या एकबुद्ध्युपक्रमो ह्यर्थात्माऽणुप्रचयविशेषात्मा गवादिर्घटादिर्वा लोकः।

---

मानज्ञानविकल्पौ तन्मूलौ त्यक्तौ, तदा तच्छून्यायां समाधिप्रज्ञायां स्वरूपमात्रेणावस्थितोऽर्थस्तत्स्वरूपमात्रतयैव न तु विकल्पितेनाकारेण परिच्छिद्यते सा निर्वितर्का समापत्तिरिति। तत् योगिनां परं प्रत्यक्षमसदारोपगन्धस्याप्यभावात्। स्यादेतत् परेण प्रत्यक्षेणार्थतत्त्वं गृहीत्वा योगिन उपपादयन्ति उपदिशन्ति च, कथं वाऽतद्विषयाभ्यामागमपरार्थानुमानाभ्यां सोऽर्थ उपदिश्यते उपपाद्यते च? तस्मादागमानुमाने तद्विषये, ते च विकल्पाविति परमपि प्रत्यक्षं विकल्प एवेत्यत आह, तच्च श्रुत इति।—यदि हि सवितर्कमिव श्रुतानुमानसहभूतं तदनुषक्तं स्यात् भवेत् सङ्कीर्णं, तयोस्तु बीजमेवैतत्, ततो हि श्रुताऽनुमाने प्रभवतः, न च यत् यस्य कारणं तत् तद्विषयं भवति, न हि धूमज्ञानं वह्निज्ञानकारणमिति वह्निविषयम्; तस्मादविकल्पेन प्रत्यक्षेण गृहीत्वा विकल्पैरुपदिशन्ति चोपपादयन्ति च। उपसंहरति—तस्मात् इति।

व्याख्येयं सूत्रं योजयति—निर्वितर्काया इति। स्मृतिपरिशुद्धावित्यादि सूत्रम्। शब्दसङ्केतश्च श्रुतञ्चानुमानञ्च तेषां ज्ञानमेव विकल्पः तस्मात् स्मृतिः तस्याः परिशुद्धिः अपगमः तस्याम्। अत्र च सङ्केतस्मृतिपरिशुद्धिर्हेतुः, श्रुतादिज्ञानस्मृतिपरिशुद्धिश्च हेतुमती, अनुमानं शब्दश्च कर्मसाधनोऽनुमेयवाचकः,

स च संस्थानविशेषो भूतसूक्ष्माणां साधारणो धर्म आत्मभूतः फलेन व्यक्तेनानुमितः स्वव्यञ्जकाञ्जनः प्रादुर्भवति, धर्मान्तरोदये च तिरोभवति, स एष धर्मोऽवयवीत्युच्यते। योऽसावेकश्च महांश्चाणीयांश्च स्पर्शवांश्च क्रियाधर्मकश्च अनित्यश्च, तेनावयविना व्यवहाराः क्रियन्ते। यस्य पुनरवस्तुकः स

स्वमिवेति इवकारो भिन्नक्रमः व्यक्तेतिपदानन्तरं द्रष्टव्यः। विषयविप्रतिपत्तिं निराकरोति, तस्या एक इति।—एकां बुद्धिमुपक्रमते आरभत इत्येकबुद्ध्युपक्रमः, तदनेन परमाणवो नानात्मानो न निर्वितर्कविषयेत्युक्तं भवति, योग्यत्वेऽपि तेषां परमसूक्ष्माणां नानाभूतानां महत्त्वैकार्थसमवेतैकत्वनिर्भासप्रत्ययविषयत्वायोगात्। अस्तु तर्हि परमार्थसत्सु परमाणुषु सांवृतः प्रतिभासधर्मः स्थौल्यम्? इत्यत आह, अर्थात्मा इति।—न स्थूलमनुभवसिद्धमसति बाधके शक्यापह्नवमिति भावः। तत्र ये पश्यन्ति द्व्यणुकादिक्रमेण गोघटादय उपजायन्ते इति, तान् प्रत्याह, अणुप्रचय इति।—अणूनां प्रचयः स्थूलरूपः परिणामः, स च विशिष्यतेऽन्यस्मात् परिणामान्तरात्, स एव आत्मा स्वरूपं यस्य स तथोक्तः। गवादिर्भोगायतनं, घटादिर्विषयः, तच्चैतदुभयमपि लोक्यते इति लोकः।

नन्वेष सूक्ष्मभूतेभ्यो भिन्नोऽभिन्नो वा स्यात्, भिन्नश्चेत् कथं तदाश्रयः? कथञ्च तदाकारः? न हि घटः पटादन्यस्तदाकारस्तदाश्रयो वा; अभिन्नश्चेत्तद्देव सूक्ष्मोऽसाधारणश्च स्यात्? अत आह, स च इति।—अयमभिप्रायः, नैकान्ततः परमाणुभ्यो भिन्नो घटादिरभिन्नो वा, भिन्नत्वे गवाश्ववत् धर्मधर्मिभावानुपपत्तेः, तस्मात् कथञ्चित् भिन्नः कथञ्चिदभिन्नश्चास्थेयः, तथा च सर्वमुपपद्यते। भूतसूक्ष्माणाम् इति षष्ठ्या कथञ्चित् भेदं सूचयति, आत्मभूत इति चाभेदम्। फलेन व्यक्तेन तदनुभवलक्षणेन तद्व्यवहारलक्षणेन च व्यक्तेन विप्रतिपन्नं प्रत्यनुमापितः। कारणभेदेन च कारणाकारतोपपन्नेत्याह—स्वव्यञ्जकाञ्जन इति। स किं तदात्मभूतो धर्मो नित्यः? नेत्याह, धर्मान्तर इति।—धर्मान्तरस्य कपालादेरुदय इत्यर्थः। तस्यावयविनः परमाणुभ्यो व्यावृत्तं रूपमादर्शयति, स एष इति।—परमाणुसाध्यायाः क्रियाया अन्या क्रिया मधूदकादिधारणलक्षणा तद्धर्मक इति। न केवलमनुभवात् अपि तु व्यवहारतोऽपि, तन्निबन्धनत्वाल्लोकयात्राया इत्याह, तेन इति।—स्यादेतत्, असति बाधकेऽनुभवोऽवयविनं व्यवस्थापयेत्,

प्रचयविशेषः सूक्ष्मञ्च कारणमनुपलभ्यमविकल्पस्य तस्य अवयव्यभावात् अतद्रूपप्रतिष्ठं मिथ्याज्ञानमिति प्रायेण सर्वमेव प्राप्तं मिथ्याज्ञानमिति, तदा च सम्यग्ज्ञानमपि किं स्याद्वि-

अस्ति च बाधकं यत् सत् तत् सर्वमनवयवं यथा विज्ञानं सच्च गोघटादि इति स्वभाव-हेतुः सत्त्वं, सत्त्वं हि विरुद्धधर्म्मसंसर्गरहितत्वेन व्याप्तं, तद्विरुद्धश्च विरुद्धधर्म्म-संसर्गः सावयवे उपलभ्यमानो व्यापकविरुद्धोपलब्ध्या सत्त्वमपि निवर्त्तयति। अस्ति चावयविनि तद्देशत्वातद्देशत्वाऽऽवृतत्वानावृतत्व-रक्तारक्तत्व-चलाचलत्वलक्षणो विरुद्ध-धर्म्मसंसर्गः इत्यत आह, यस्य पुनः इति।—अयमभिप्रायः, अनु-भवसिद्धं सत्त्वं हेतुः क्रियते, यत् किल पांशुलपादुको हालिकोऽपि प्रतिपद्यते, अन्यदाऽनुभवसिद्धात्, तत्रान्यदसिद्धत्वादहेतुः, अनुभवसिद्धन्तु घटादीनां सत्त्व-मर्थक्रियाकारित्वरूपं न स्थूलादन्यत्, सोऽयं हेतुः स्थूलत्वमपाकुर्वन्नात्मानमेव व्याहन्ति। ननु न स्थूलत्वमेव सत्त्वम् अपि तु असतो व्यावृत्तिः, अस्थौल्यव्यावृत्तिश्च स्थौल्यं, व्यावर्त्यभेदाच्च व्यावृत्तयो भिद्यन्ते, अतः स्थौल्याभावेऽपि न सत्त्व-व्याहतिरन्यत्वात्। भवतु वा व्यावृत्तिभेदादवसायविषयभेदः, यत्पूर्वकास्त्ववसा-यास्तस्यानुभवस्याविकल्पस्य प्रमाणस्य को विषयः? इति निरूपयतु भवान्। रूपपरमाणवो हि निरन्तरोत्पादा अगृहीतपरमसूक्ष्मतत्त्वा इति चेत्? हन्तैते गन्धरसस्पर्शपरमाणुभिरन्तरिता न निरन्तराः, तस्मात् अन्तरालाग्रहे एकघन-वनप्रत्ययवत्परमाण्वालम्बनः सन् अयं विकल्पो मिथ्येति तत्प्रभवा विकल्पा न पारम्पर्य्येणापि वस्तुप्रतिबद्धा इति, कुतस्तदवसितस्य सत्त्वस्यानवयवत्वसाधकत्वम्? तस्मादविकल्पस्य प्रत्यक्षस्य प्रामाण्यमिच्छता तदनुभूयमानस्थौल्यस्यैव सत्त्व-मविकल्पावसेयमकामयताऽभ्युपेयं, तथा च तद्बाधमानं सत्त्वमात्मानमेवापबाधेत। परमसूक्ष्माः परमाणवो विजातीयपरमाण्वन्तरिताः अनुभवविषया इति व्याहत-मङ्गीकरणं, तदिदमुक्तं—यस्य पुनरवस्तुकः स प्रचयविशेषो निर्विकल्पस्य विषय इति। सन्तु तर्हि सूक्ष्माः परमाणवो निर्विकल्पविषयाः? इत्यत आह, सूक्ष्मञ्च कारणमनुपलभ्यमविकल्पस्य इति।—तस्यावयव्यभावात् हेतोः अतद्रूपप्रतिष्ठं मिथ्याज्ञानम् इति लक्षणेन सर्वमेव प्राप्तं मिथ्याज्ञानं यत् स्थौल्यालम्बनं यच्च तदधिष्ठानसत्त्वालम्बनमित्यर्थः। नन्वेतावताऽपि न ज्ञानमात्मनि मिथ्या भवति, तस्यावयवित्वेनाप्रकाशनात्? इत्यत आह—प्रायेण इति। ननु किमेतावता-

षयाभावात् ? यत् यदुपलभ्यते तत्तदवयवित्वेनाऽऽघ्रातं, तस्मादस्त्यवयवी यो महत्त्वादिव्यवहारापन्नः समापत्तेर्निर्वितर्काया विषयो भवति ॥ ४३ ॥

**एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता ॥ ४४ ॥**

तत्र भूतसूक्ष्मेषु अभिव्यक्तधर्मकेषु देशकालनिमित्तानुभवावच्छिन्नेषु या समापत्तिः सा सविचारेत्युच्यते। तत्राप्येकबुद्धिनिर्ग्राह्यमेवोदितधर्मविशिष्टं भूतसूक्ष्ममालम्बनीभूतं

ऽपि ? इत्यत आह, तदाच इति।—सत्त्वादिज्ञानं चेन्मिथ्या तदा सत्त्वादिहेतुकमनवयवित्वादिज्ञानमपि मिथ्यैव, तस्यापि हि निर्विकल्पागोचरास्थूलमेवावसेयतया विषयः, स च नास्तीति तात्पर्य्यार्थः। विषयाभाव एव कुतः ? इत्यत आह, यत् यत् इति।—विरोधश्च परिणामवैचित्र्येण भेदाभेदेन च उक्तोपपत्त्यनुसारेण उद्धर्त्तव्य इति सर्वं रमणीयम् ॥ ४३ ॥

एतयैव सविचारा निर्विचारा च सूक्ष्मविषया व्याख्याता इति सूत्रम्। अभिव्यक्तो घटादिधर्मो येषां तथोक्ताः, घटादिधर्मोपगृहीता इति यावत्। देशः उपर्य्यधःपार्श्वादिः, कालो वर्त्तमानः, निमित्तं पार्थिवस्य परमाणोर्गन्धतन्मात्रप्रधानेभ्यः पञ्चतन्मात्रेभ्य उत्पत्तिः, एवमाप्यस्य परमाणोर्गन्धतन्मात्रवर्जितेभ्यो रसतन्मात्रप्रधानेभ्यश्चतुर्भ्यः, एवं तैजसस्य परमाणोर्गन्धरसतन्मात्ररहितेभ्यो रूपतन्मात्रप्रधानेभ्यस्त्रिभ्यः, एवं वायवीयस्य परमाणोर्गन्धादितन्मात्रहीनाभ्यां स्पर्शप्रधानाभ्यां स्पर्शशब्दतन्मात्राभ्याम्, एवं नाभसस्य शब्दतन्मात्रादेवैकस्मात्, तदिदं निमित्तं भूतसूक्ष्माणाम्, एतेषां देशकालनिमित्तानामनुभवः, तेनावच्छिन्नेषु, नाननुभूतविशेषणा बुद्धिर्विशेष्य उपजायते इत्यर्थः। ननु सवितर्कया सह किं सारूप्यं सविचारायाः ? इत्यत आह, तत्रापि इति।—पार्थिवो हि परमाणुः पञ्चतन्मात्रप्रचयात्मा एकबुद्धिनिर्ग्राह्यः, एवमाप्यादयोऽपि चतुस्त्रिद्व्येकतन्मात्रात्मान एकबुद्धिनिर्ग्राह्या वेदितव्याः। उदितो वर्त्तमानो धर्मस्तेन विशिष्टम्। एतावता चात्र सङ्केतस्मृत्यागमानुमानविकल्पानुवेधः सूचितः, न हि प्रत्यक्षेण स्थूले दृश्यमाने परमाणवः प्रकाशन्ते, अपि त्वागमानुमानाभ्यां, तस्मादुपपन्नमस्याः सङ्कीर्णत्वमिति। निर्विचारामाह,

समाधिप्रज्ञायामुपतिष्ठते। या पुनः सर्व्वथा सर्व्वतः शान्तोदिताव्यपदेश्यधर्मानवच्छिन्नेषु सर्वधर्मानुपातिषु सर्व्वधर्मात्मकेषु समापत्तिः सा निर्विचारेत्युच्यते, एवं-स्वरूपं हि तत् भूतसूक्ष्ममेतेनैव स्वरूपेणालम्बनीभूतमेव समाधिप्रज्ञास्वरूपमुपरञ्जयति, प्रज्ञा च स्वरूपशून्येवार्थमात्रा यदा भवति तदा निर्विचारेत्युच्यते, तत्र महद्वस्तुविषया सवितर्का निर्वितर्का च, सूक्ष्मविषया सविचारा निर्विचारा च, एवमुभयोरेतयैव निर्वितर्कया विकल्पहानिर्व्याख्याता इति॥ ४४॥

## सूक्ष्मविषयत्वञ्चालिङ्गपर्य्यवसानम्॥४५॥

पार्थिवस्य अणोः गन्धतन्मात्रं सूक्ष्मो विषयः, आप्यस्य रसतन्मात्रं, तैजसस्य रूपतन्मात्रं, वायवीयस्य स्पर्शतन्मात्रं, आकाशस्य शब्दतन्मात्रमिति, तेषामहङ्कारः, अस्यापि लिङ्गमात्रं सूक्ष्मो विषयः, लिङ्गमात्रस्याप्यलिङ्गं सूक्ष्मो

---

या पुनरिति।—सर्वथा सर्वेण नीलपीतादिप्रकारेण, सर्वत इति सार्व्वविभक्तिकस्तसिः, सर्वैः देशकालनिमित्तानुभवैरित्यर्थः। तदनेन स्वरूपेण कालानवच्छेदः परमाणूनामिति दर्शितं, नापि तदारब्धधर्मद्वारेणेत्याह, शान्त इति।—शान्ताः अतीताः, उदिताः वर्त्तमानाः, अव्यपदेश्याः भविष्यन्तः धर्मास्तैरनवच्छिन्नेषु। अनवच्छिन्ना धर्मैः परमाणवः किमसम्बद्धा एव तैः? इत्यत आह—सर्वधर्मानुपातिषु इति। कतमेन सम्बन्धेन धर्माननुपतन्ति परमाणवः? इत्यत आह, सर्वधर्मात्मकेषु इति।—कथञ्चित् भेदः कथञ्चिदभेदो धर्माणां परमाणुभ्य इत्यर्थः। कस्मात् पुनरियं समापत्तिरेतद्विषया? इत्यत आह, एवं-स्वरूपं हि इति।—वस्तुतत्त्वग्राहिणी नातत्त्वे प्रवर्त्तत इत्यर्थः। विषयमभिधायास्याः स्वरूपमाह—प्रज्ञा च इति। सङ्कलय्य स्वरूपभेदोपयोगिविषयमाह—तत्र इति। उपसंहरति, एवम् इति।—उभयोः आत्मनश्च निर्विचारायाश्चेति॥ ४४॥

किं भूतसूक्ष्म एव ग्राह्यविषया समापत्तिः समाप्यते? न, किन्तु सूक्ष्मविषयत्वं चालिङ्गपर्य्यवसानम्।

पार्थिवस्य परमाणोः सम्बन्धिनी या गन्धतन्मात्रता सा समापत्तेः सूक्ष्मो विषयः, एवमुत्तरत्रापि योज्यम्। लिङ्गमात्रं महत्तत्त्वं, तद्धि लयं गच्छति प्रधाने

विषयः, न चालिङ्गात् परं सूक्ष्ममस्ति। नन्वस्ति पुरुषः सूक्ष्म इति? सत्यं, यथा लिङ्गात् परमलिङ्गस्य सौक्ष्म्यं न चैवं पुरुषस्य, किन्तु लिङ्गस्य अन्वयिकारणं पुरुषो न भवति हेतुस्तु भवतीति, अतः प्रधाने सौक्ष्म्यं निरतिशयं व्याख्यातम्॥ ४५॥

**ता एव सबीजः समाधिः॥ ४६॥**

ताश्चतस्रः समापत्तयो बहिर्वस्तुबीजा इति समाधिरपि सबीजः, तत्र स्थूलेऽर्थे सवितर्को निर्वितर्कः, सूक्ष्मेऽर्थे सविचारो निर्विचार इति चतुर्द्धोपसङ्ख्यातः समाधिरिति॥ ४६॥

**निर्विचारवैशारद्येऽध्यात्मप्रसादः॥ ४७॥**

अशुद्ध्यावरणमलापेतस्य प्रकाशात्मनो बुद्धिसत्त्वस्य

---

इति। अलिङ्गं प्रधानं, तद्धि न क्वचिल्लयं गच्छति इत्यर्थः। अलिङ्गपर्य्यवसानत्वमाह—न चालिङ्गात् परम् इति। चोदयति, ननु इति।—पुरुषोऽपि सूक्ष्मो नालिङ्गमेवेत्यर्थः। परिहरति, सत्यम् इति।—उपादानतया सौक्ष्म्यमलिङ्ग एव नान्यत्रेत्यर्थः। तत्र पुरुषार्थनिमित्तत्वात् महदहङ्कारादेः पुरुषोऽपि कारणमलिङ्गवत् इति कुतः एवं लक्षणमलिङ्गस्यैव सौक्ष्म्यम्? इत्याशयवान् पृच्छति—किन्तु इति। उत्तरमाह, लिङ्गस्य इति।—सत्यं कारणं न तु उपादानं, यथा हि प्रधानं महदादिभावेन परिणमते न तथा पुरुषस्तद्धेतुरपीत्यर्थः। उपसंहरति—अतः प्रधान एव सौक्ष्म्यं निरतिशयं व्याख्यातम् इति॥ ४५॥

चतसृणामपि समापत्तीनां ग्राह्यविषयाणां सम्प्रज्ञातत्वमाह, ता एव सबीजः समाधिः।—एवकारो भिन्नक्रमः सबीज इत्यस्यानन्तरं द्रष्टव्यः, ततः चतस्रः समापत्तयो ग्राह्यविषयाः सबीजतया नियम्यन्ते, सबीजता तु अनियता ग्रहीतृग्रहणगोचरायामपि समापत्तौ विकल्पाविकल्पभेदेनानिषिद्धा व्यवतिष्ठते, तेन ग्राह्ये चतस्रः समापत्तयो ग्रहीतृग्रहणयोश्च चतस्र इत्यष्टौ ते भवन्तीति। निगदव्याख्यातं भाष्यम्॥ ४६॥

चतसृषु समापत्तिषु ग्राह्यविषयासु निर्विचारायाः शोभनत्वमाह—निर्विचारवैशारद्येऽध्यात्मप्रसादः।

वैशारद्यपदार्थमाह, अशुद्धि इति।—रजस्तमसोरुपचयोऽशुद्धिः, सैव आवरणलक्षणो मलस्तस्मादपेतस्य, प्रकाशात्मनः प्रकाशस्वभावस्य, बुद्धिसत्त्वस्य अत

रजस्तमोभ्यामनभिभूतः स्वच्छः स्थितिप्रवाहो वैशारद्यं, यदा निर्विचारस्य समाधेर्वैशारद्यमिदं जायते तदा योगिनो भवति अध्यात्मप्रसादः भूतार्थविषयः क्रमाननुरोधी स्फुटप्रज्ञालोकः, तथाचोक्तं, "प्रज्ञाप्रसादमारुह्य अशोच्यः शोचतो जनान्। भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यति॥" इति॥ ४७॥

**ऋतम्भरा तत्र प्रज्ञा॥ ४८॥**

तस्मिन् समाहितचित्तस्य या प्रज्ञा जायते तस्या ऋतम्भरेति संज्ञा भवति, अन्वर्था च सा, सत्यमेव बिभर्त्ति न तत्र विपर्य्यासगन्धोऽपि अस्तीति, तथाचोक्तम् "आगमेनानुमानेन ध्यानाभ्यासरसेन च। त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम्॥" इति॥ ४८॥

सा पुनः,—

**श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात्॥ ४९॥**

---

एवानभिभूतः। स्यादेतत्, ग्राह्यविषया चेत् समापत्तिः, कथमात्मविषयः प्रसादः? इत्यत आह, भूतार्थविषय इति।—नात्मविषयः किन्तु तदाधार इत्यर्थः। क्रमाननुरोधी युगपदित्यर्थः। अत्रैव पारमर्षीं गाथामुदाहरति, तथाच इति।—ज्ञानालोकप्रकर्षेणात्मानं सर्वेषामुपरि पश्यन् दुःखत्रयपरीतान् शोचतो जनान् जानातीत्यर्थः॥ ४७॥

अत्रैव योगिजनप्रसिद्धान्वर्थसंज्ञाकथनेन योगिसम्मतिमाह— ऋतम्भरा तत्र प्रज्ञा। सुगमं भाष्यम्। आगमेन इति वेदविहितं श्रवणमुक्तम्, अनुमानेन इति मननं, ध्यानं चिन्ता, तस्याभ्यासः पौनःपुन्येनानुष्ठानं, तस्मिन् रस आदरः, तदनेन निदिध्यासनमुक्तम्॥ ४८॥

स्यादेतत्, आगमानुमानगृहीतार्थविषयभावनाप्रकर्षलब्धजन्मा निर्विचारा आगमानुमानविषयमेव गोचरयेत्, न खल्वन्यविषयानुभवजन्मा संस्कारः प्रभुः अन्यत्र ज्ञानं जनयितुम्, अतिप्रसङ्गात्, तस्मान्निर्विचारा चेत् ऋतम्भरा, आगमानुमानयोरपि तत्प्रसङ्गः? इत्यत आह, श्रुतानुमानप्रज्ञाभ्यामन्यविषया विशेषार्थत्वात् इति।—बुद्धिसर्गे

श्रुतम् आगमविज्ञानं, तत् सामान्यविषयं, न ह्यागमेन शक्यो विशेषोऽभिधातुं, कस्मात्? न हि विशेषेण कृतसङ्केतः शब्द इति। तथा अनुमानं सामान्यविषयमेव, यत्र प्राप्तिस्तत्र गतिः, यत्राप्राप्तिस्तत्र न भवति गतिरित्युक्तम्, अनुमानेन च सामान्येन उपसंहारः; तस्माच्छ्रुतानुमानविषयो न विशेषः कश्चिदस्तीति; न चास्य सूक्ष्मव्यवहितविप्रकृष्टस्य वस्तुनः लोकप्रत्यक्षेण ग्रहणं, न चास्य विशेषस्याप्रामाणिकस्याभावोऽस्तीति समाधिप्रज्ञानिर्ग्राह्य एव स विशेषो भवति भूतसूक्ष्मगतो वा पुरुषगतो वा। तस्माच्छ्रुतानुमानप्रज्ञाभ्यामन्यविषया सा प्रज्ञा विशेषार्थत्वात् इति ॥ ४९ ॥

---

हि प्रकाशस्वभावं सर्वार्थदर्शनसमर्थमपि तमसाऽऽवृतं यत्रैव रजसोद्घाट्यते तत्रैव गृह्णाति, यदा तु अभ्यासवैराग्याभ्यामपास्तरजस्तमोमलमनवद्यवैशारद्यमुद्योतते, तदा अस्यातिपतितसमस्तमानमेयसीम्नः प्रकाशानन्त्ये सति किन्नाम यन्न गोचरः? इति भावः।

व्याचष्टे, श्रुतमागमविज्ञानं, तत् सामान्यविषयम् इति। कस्मात्? न ह्यागमेन शक्यो विशेषोऽभिधातुम्; कुतः? यस्मादानन्त्याद्व्यभिचाराच्च न विशेषेण कृतसङ्केतः शब्दः, यस्मादस्य विशेषेण सह न वाच्यवाचकसम्बन्धः प्रतीयते, न च वाक्यार्थोऽपीदृशो विशेषः सम्भवति। अनुमानेऽपि लिङ्गलिङ्गिसम्बन्धग्रहणाधीनजन्मनि गतिरेषैवेत्याह—तथाऽनुमानम् इति। यत्राप्राप्तिरित्यत्र यत्र-तत्र-शब्दयोः स्थानपरिवर्त्तनेन व्याप्य-व्यापकभावो गमयितव्य, अतोऽत्रानुमानेन सामान्येनोपसंहारः। उपसंहरति—तस्मात् इति। अस्तु तर्हि सम्बन्धग्रहानपेक्षं लोकप्रत्यक्षं, न तत् सामान्यविषयमित्यत आह, न चास्य इति। —मा भूत् सम्बन्धग्रहाधीनं लोकप्रत्यक्षम्, इन्द्रियाधीनं तु स्यात् न चेन्द्रियाणामस्मिन्नस्ति योग्यतेत्यर्थः। ननु यद्यागमानुमानप्रत्यक्षागोचरो विशेषस्तर्हि नास्ति प्रमाणविरहादित्यत आह, न च इति।—न हि प्रमाणं व्यापकं कारणं वा प्रमेयस्य, येन तन्निवृत्तौ निवर्त्तेत, नो खलु कलावतश्चन्द्रस्य परभागवर्त्तिहरिणसद्भावं प्रति न सन्दिहते प्रामाणिका इत्यर्थः। इति तस्मात् समाधिप्रज्ञानिर्ग्राह्य एवेति।—अत्र च विवादाध्यासिताः परमाणव आत्मानश्च प्रातिस्विकविशेषशालिनः, द्रव्यत्वे सति परस्परं व्यावर्त्तमानत्वात्; ये द्रव्यत्वे सति परस्परं व्यावर्त्तन्ते ते प्रातिस्विकविशेषशालिनः, यथा खण्डमुण्डादय इति। अनुमानेन आगमेन च ऋतम्भरप्रज्ञोपदेशपरेण यद्यपि विशेषो निरूप्यते, तदनिरूपणे

समाधिप्रज्ञाप्रतिलम्भे योगिनः प्रज्ञाकृतः संस्कारो नवो नवो जायते।

## तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी ॥ ५० ॥

समाधिप्रज्ञाप्रभवः संस्कारो व्युत्थानसंस्काराशयं बाधते, व्युत्थानसंस्काराभिभवात् तत्प्रभवाः प्रत्यया न भवन्ति, प्रत्ययनिरोधे समाधिरुपतिष्ठते, ततः समाधिजा प्रज्ञा, ततः प्रज्ञाकृताः संस्कारा इति नवो नवः संस्काराशयो जायते, ततः प्रज्ञा ततश्च संस्कारा इति। कथमसौ संस्कारातिशयश्चित्तं साधिकारं न करिष्यति ? इति ; न ते प्रज्ञाकृताः संस्काराः क्लेशक्षय-

---

संशयः स्यात्, न्यायप्राप्तत्वात्, तथाऽप्यदूरविप्रकर्षेण तत्सत्त्वं कथञ्चिद्गोचरयतः श्रुतानुमाने, न तु साक्षात्कार्थमिव समुच्चयादिपदानि लिङ्गसङ्ख्यायोगितया, तस्मात् सिद्धं श्रुतानुमानप्रज्ञाभ्यामन्यविषयेति ॥ ४९ ॥

स्यादेतत्, भवतु परमार्थविषयः सम्प्रज्ञातो यथोक्तोपायाभ्यासात्, अनादिना तु व्युत्थानसंस्कारेण निरूढनिविड़तया प्रतिबन्धनीया समाधिप्रज्ञा सा, वात्याऽऽवर्त्तमध्यवर्त्तिप्रदीपपरमाणुरिव ? इति शङ्कामपनेतुं सूत्रमवतारयति—समाधिप्रज्ञा इति।

सूत्रं पठति, तज्जः संस्कारोऽन्यसंस्कारप्रतिबन्धी।—तत् इति निर्विचारां समापत्तिं परामृशति। अन्य इति व्युत्थानमाह। भूतार्थपक्षपाती हि धियां स्वभावः, तावदेवेयमनवस्थिता भ्राम्यति न यावत् तत्त्वं प्रतिलभते, तत्प्रतिलम्भे तत्रास्थितपदा सती संस्कारबुद्धि संस्कारचक्रक्रमेण आवर्त्तमानमनादिमप्यतत्त्वसंस्कारबुद्धिक्रमं बाधत एवेति तथा च बाह्या अप्याहुः निरुपद्रवभूतार्थस्वभावस्य विपर्य्ययैः न बाधः अनादिमत्त्वेऽपि बुद्धेस्तत्पक्षपाततः इति। स्यादेतत्, समाधिप्रज्ञातोऽस्तु व्युत्थानजस्य संस्कारस्य निरोधः, समाधिजस्तु संस्कारातिशयः समाधिप्रज्ञाप्रसवहेतुरस्त्यविकलः इति तदवस्थैव चित्तस्य साधिकारतेति। चोदयति—कथमसौ इति। परिहरति, न ते इति।—चित्तस्य हि कार्य्यद्वयं शब्दाद्युपभोगो विवेकख्यातिश्चेति ; तत्र क्लेशकर्माशयसहितं शब्दाद्युपभोगे प्रवर्त्तते, प्रज्ञाप्रभवसंस्कारोन्मूलितनिखिलक्लेशकर्माशयस्य तु चेतसोऽवसितप्रायाधिकारभावस्य विवेकख्यातिमात्रमवशिष्यते कार्य्यं, तस्मात् समाधिसंस्काराच्चित्तस्य न भोगा-

हेतुत्वाच्चित्तमधिकारविशिष्टं कुर्वन्ति, चित्तं हि ते स्वकार्य्या-दवसादयन्ति, ख्यातिपर्य्यवसानं हि चित्तचेष्टितमिति ॥ ५० ॥

किञ्चास्य भवति ?

**तस्यापि निरोधे सर्वनिरोधान्निर्वीजः समाधिः ॥ ५१ ॥**

स न केवलं समाधिप्रज्ञाविरोधी, प्रज्ञाकृतानां संस्काराणा-मपि प्रतिबन्धी भवति, कस्मात् ? निरोधजः संस्कारः समाधिजान् संस्कारान् बाधते इति। निरोधस्थितिकाल-क्रमानुभवेन निरोधचित्तकृतसंस्कारास्तित्वमनुमेयम्।

---

धिकारहेतवः,प्रत्युत तत्परिपन्थिन इति। स्वकार्य्यात् भोगलक्षणात्, अवसादयन्ति असमर्थं कुर्व्वन्ति इत्यर्थः, कस्मात् ? ख्यातिपर्य्यवसानं हि चित्तचेष्टितं, तावद्धि भोगाय चित्तं चेष्टते, न यावद्विवेकख्यातिमनुभवति ; सञ्जातविवेकख्यातिनस्तु क्लेशनिवृत्तौ न भोगा-धिकार इत्यर्थः ; तदेव भोगाधिकारप्रशान्तिः प्रयोजनं प्रज्ञासंस्काराणामित्युक्तम् ॥ ५० ॥

पृच्छति, किञ्च इति।—किञ्चास्य भवति प्रज्ञासंस्कारवच्चित्तं प्रज्ञाप्रवाहजनकतया तथैव साधिकारमित्यधिकारापवृत्तयेऽन्यदपि किञ्चिदपेक्षणीयमस्तीत्यर्थः।

सूत्रेणोत्तरमाह, तस्यापि निरोधे सर्वनिरोधान्निर्वीजः समाधिः।—परेण वैराग्येण ज्ञानप्रसादमात्रलक्षणेन संस्कारोपजननद्वारा तस्यापि प्रज्ञाकृतस्य संस्कारस्य निरोधः, न केवलं प्रज्ञाया इत्यपिशब्दार्थः, सर्वस्योत्पद्यमानस्य संस्कारप्रवाहस्य निरोधात् कारणाभावेन कार्य्यानुत्पादनात्. सोऽयं निर्वीजः समाधिः।

व्याचष्टे, स इति।—सः निर्वीजः समाधिः समाधिप्रज्ञाविरोधिनः परस्माद्वैराग्या ज्जायमानः स्वकारणद्वारेण न केवलं समाधिप्रज्ञाविरोधी, प्रज्ञाकृतानामप्यसौ संस्काराणां परिपन्थी भवति। ननु वैराग्यजं विज्ञानं सद्विज्ञानं प्रज्ञामात्रं बाधतां, संस्कारस्त्वविज्ञानरूपं कथं बाधते ? दृष्टा हि जाग्रतोऽपि स्वप्नदृष्टार्थे स्मृतिः ? इत्याशयवान् पृच्छति—कस्मात् इति। उत्तरमाह, निरोधज इति।—निरुध्यते प्रज्ञाऽनेनेति निरोधः परं वैराग्यं, ततो जातो निरोधजः संस्कारः, संस्कारा-देव दीर्घकालनैरन्तर्य्यसत्काराऽऽसेवितपरवैराग्यजन्मनः प्रज्ञासंस्कारबाधः, न तु विज्ञाना-दित्यर्थः। स्यादेतत्, निरोधजसंस्कारसद्भावे किं प्रमाणम् ? स हि प्रत्यक्षेण वाऽनुभूयेत स्मृत्या वा कार्य्येणानुमीयेत, न च सर्ववृत्तिनिरोधे प्रत्यक्षमस्ति योगिनः, नापि स्मृतिः, तस्य

व्युत्थाननिरोधसमाधिप्रभवैः सह कैवल्यभागीयैः संस्कारैश्चित्तं स्वस्यां प्रकृताववस्थितायां प्रविलीयते, तस्मात्ते संस्काराः चित्तस्याधिकारविरोधिनो न स्थितिहेतवो भवन्तीति, यस्मात् अवसिताधिकारं सह कैवल्यभागीयैः संस्कारैश्चित्तं विनिवर्त्तते, तस्मिन्निवृत्ते पुरुषः स्वरूपप्रतिष्ठः अतः शुद्धमुक्त इत्युच्यते ॥ ५१ ॥

इति पातञ्जले साङ्ख्यप्रवचने योगशास्त्रे

समाधिपादः प्रथमः ॥ १ ॥

---

वृत्तिमात्रनिरोधतया स्मृतिजनकत्वासम्भवादित्यत आह, :निरोध इति ।—निरोधस्थितिः चित्तस्य निरुद्धावस्था, तस्याः कालक्रमो मुहूर्त्तार्द्धयामयामाहोरात्रादिः, तदनुभवेन ; एतदुक्तं भवति, वैराग्याभ्यासप्रकर्षानुरोधी निरोधप्रकर्षो मुहूर्त्तार्द्धयामादिव्यापितयाऽनुभूयते योगिना, न च परवैराग्यचणाः क्रमनियततया परस्परमसम्भवन्तस्तत्कालव्यापितया सातिशयं निरोधं कर्त्तुमीशत इति तत्तवैराग्यचणप्रचयजन्यः स्थायी संस्कारप्रचय एषितव्य इति भावः ।

ननु उच्छियन्तां प्रज्ञासंस्काराः, निरोधसंस्कारस्तु कुतः समुच्छिद्यते ? अनुच्छेदे वा साधिकारत्वमेव ? इत्यत आह, व्युत्थान इति ।—व्युत्थानञ्च तस्य निरोधसमाधिश्च सम्प्रज्ञातः, तत्प्रभवाः संस्काराः, कैवल्यभागीयाः निरोधजाः संस्कारा इत्यर्थः । व्युत्थानप्रज्ञासंस्काराश्चित्ते प्रलीना इति भवति चित्तं व्युत्थानप्रज्ञासंस्कारवत्, निरोधसंस्कारस्तु प्रत्युदित एवाऽऽस्ते चित्ते, निरोधसंस्कारे सत्यपि चित्तमनधिकारवत्, पुरुषार्थजनकं हि चित्तं साधिकारं, शब्दाद्युपभोगविवेकख्याती च तथा पुरुषार्थौ, संस्कारशेषतायान्तु न बुद्धेः प्रतिसंवेदी पुरुष इति नासौ पुरुषार्थः, विदेहप्रकृतिलयानां न निरोधभागितया साधिकारं चित्तम्, अपि तु क्लेशवासिततयेत्याशयवानाह—यस्मादिति । शेषं सुगमम् । योगस्योद्देशनिर्देशौ तदर्थं वृत्तिलक्षणम् । योगोपायाः प्रभेदाश्च पादेऽस्मिन्नुपवर्णिताः ॥ ५१ ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां

( तत्त्ववैशारद्यां ) प्रथमः समाधिपादः समाप्तः ।



# साधनपादः ।

उद्दिष्टः समाहितचित्तस्य योगः, कथं व्युत्थितचित्तोऽपि योगयुक्तः स्यात्? इति एतदारभ्यते।

**तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः ॥१॥**

नातपस्विनो योगः सिध्यति, अनादिकर्म्मक्लेशवासना चित्रा प्रत्युपस्थितविषयजाला चाशुद्धिर्नान्तरेण तपः सम्भेद-मापद्यते इति तपस उपादानं, तच्च चित्तप्रसादनमबाध-मानमनेनाऽऽसेव्यमिति मन्यते। स्वाध्यायः प्रणवादिपवि-त्राणां जपः, मोक्षशास्त्राध्ययनं वा। ईश्वरप्रणिधानं सर्व-क्रियाणां परमगुरावर्पणं, तत्फलसन्न्यासो वा ॥ १ ॥

---

ननु प्रथमपादेनैव सोपायः सावान्तरप्रभेदः सफलो योग उक्तः, तत् किमपर-मवशिष्यते यदर्थं द्वितीयपादः प्रारभ्येत? इत्यत आह, उद्दिष्ट इति।—अभ्यासवैराग्ये हि योगोपायौ प्रथमे पादे उक्तौ, न च तौ व्युत्थितस्य द्रागित्येव सम्भवत इति द्वितीयपादोप-देश्यानुपायानपेक्षते सत्त्वशुद्ध्यर्थं, ततो हि विशुद्धसत्त्वः कृतरक्षासंविधानोऽभ्यासवैराग्ये प्रत्यहं भावयति। समाहितत्वम् अविक्षिप्तत्वं, कथं व्युत्थितचित्तोऽप्युपदेक्ष्यमाणैरुपायै-र्युक्तः सन् योगी स्यादित्यर्थः।

तत्र वक्ष्यमाणेषु नियमेष्वाऽस्य प्राथमिकं प्रत्युपयुक्ततरतया प्रथमतः क्रियायोग-मुपदिशति सूत्रकारः, तपःस्वाध्यायेश्वरप्रणिधानानि क्रियायोगः।—क्रियैव योगः क्रियायोगः योगसाधनत्वात्; अत एव विष्णुपुराणे खाण्डिक्यकेशिध्वजसंवादे "योगयुक् प्रथमं योगी युञ्जमानोऽभिधीयते" इत्युपक्रम्य तपःस्वाध्यायादयो दर्शिताः।

व्यतिरेकमुखेन तपस उपायत्वमाह—नातपस्विन इति। तपसोऽवान्तरव्यापारमुपा-यतोपयोगिनं दर्शयति, अनादि इति।—अनादिभ्यां कर्म्मक्लेशवासनाभ्यां चित्रा, अत एव प्रत्युपस्थितम् उपनतं विषयजालं यस्याः सा तथोक्ता, अशुद्धिः रजस्तमःसमुद्रेकः, नान्तरेण तपः सम्भेदमापद्यते—सान्द्रस्य नितान्तविरलता सम्भेदः। ननूपादीयमानमपि तपो धातुवैषम्यहेतुतया योगप्रतिपक्ष इति कथं तदुपायः? इत्यत आह, तच्च इति।—

स हि क्रियायोगः।

**समाधिभावनार्थः क्लेशतनूकरणार्थश्च ॥ २ ॥**

स हि आसेव्यमानः समाधिं भावयति, क्लेशांश्च प्रतनूकरोति, प्रतनूकृतान् क्लेशान् प्रसङ्ख्यानाग्निना दग्धवीजकल्पानप्रसवधर्म्मिणः करिष्यतीति, तेषां तनूकरणात् पुनः क्लेशैरपरामृष्टा सत्त्वपुरुषान्यताख्यातिः सूक्ष्मा प्रज्ञा समाप्ताधिकारा प्रतिप्रसवाय कल्पिष्यते इति ॥ २ ॥

अथ के ते क्लेशाः? कियन्तो वा? इति।

---

तावन्मात्रमेव तपश्चरणीयं न यावता धातुवैषम्यमापद्येतेत्यर्थः। प्रणवादयः पुरुषसूक्तरुद्रमण्डलब्राह्मणादयो वैदिकाः, पौराणिकाश्च ब्रह्मपारायणादयः। परमगुरुः भगवानीश्वरः तस्मिन्, यत्रेदमुक्तं "कामतोऽकामतो वाऽपि यत् करोमि शुभाशुभम्। तत् सर्वं त्वयि संन्यस्तं त्वत्प्रयुक्तः करोम्यहम् ॥" इति। तत्फलसन्न्यासो वा फलानभिसन्धानेन कार्य्यकरणं, यत्रेदमुक्तं "कर्म्मण्येवाधिकारस्ते मा फलेषु कदाचन। मा कर्मफलहेतुर्भूः मा ते सङ्गोऽस्त्वकर्म्मणि ॥" इति ॥ १ ॥

तस्य प्रयोजनाभिधानाय सूत्रमवतारयति—स हि इति।

समाधिभावनार्थः क्लेशतनूकरणार्थश्च इति सूत्रम्।

ननु क्रियायोग एव चेत् क्लेशान् प्रतनूकरोति, कृतं तर्हि प्रसङ्ख्यानेन? इत्यत आह, प्रतनूकृतान् इति।—क्रियायोगस्य प्रतनूकरणमात्रे व्यापारो न तु वन्ध्यत्वे क्लेशानां, प्रसङ्ख्यानस्य तु तद्वन्ध्यत्वे। दग्धवीजकल्पान् इति वन्ध्यत्वेन दग्धकल्पमवीजसारूप्यमुक्तम्। स्यादेतत्, प्रसङ्ख्यानमेव चेत् क्लेशानप्रसवधर्म्मिणः करिष्यति. कृतमेषां प्रतनूकरणेन? इत्यत आह, तेषाम् इति।—क्लेशानामतानवे हि बलवद्विरोधिग्रस्ता सत्त्वपुरुषान्यताख्यातिरुद्देतुमेव नोत्सहते प्रागेव तद्वन्ध्यभावं कर्त्तुं, प्रविरलीकृतेषु तु क्लेशेषु दुर्बलेषु तद्विरोधिन्यपि वैराग्याभ्यासाभ्यामुपजायते, उपजाता चैतैरपरामृष्टा अनभिभूता नैव यावत् परामृश्यते, सत्त्वपुरुषान्यतामात्रख्यातिः सूक्ष्मा प्रज्ञा—अतीन्द्रियतया सूक्ष्मोऽस्या विषय इति सूक्ष्मा प्रज्ञा, प्रतिप्रसवाय प्रविलयाय कल्पिष्यते, कुतः? यतः समाप्ताधिकारा समाप्तोऽधिकारः कार्य्यारम्भणं गुणानां यया हेतुभूतया सा तथोक्तेति ॥ २ ॥

**अविद्याऽस्मिता-राग-द्वेषाभिनिवेशाः पञ्च क्लेशाः ॥ ३ ॥**

क्लेशा इति पञ्च विपर्य्यया इत्यर्थः। ते स्यन्दमाना गुणाधिकारं द्रढ़यन्ति, परिणाममवस्थापयन्ति, कार्य्यकारण-स्रोत उन्नमयन्ति, परस्परानुग्रहतन्त्री भूत्वा कर्म्मविपाकञ्च अभिनिर्हरन्ति इति। ३ ॥

**अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नो-दाराणाम् ॥ ४ ॥**

तत्र अविद्या क्षेत्रं प्रसवभूमिः, उत्तरेषाम् अस्मितादीनां चतुर्विधकल्पितानां प्रसुप्ततनुविच्छिन्नोदाराणाम्। तत्र का प्रसुप्तिः? चेतसि शक्तिमात्रप्रतिष्ठानां वीजभावोपगमः, तस्य

---

पृच्छति—अथ इति।

"अविद्या" इत्यादि सूत्रेण परिहरति—अविद्याऽस्मिता-राग-द्वेषाभिनिवेशाः पञ्च क्लेशाः।

क्लेशा इति व्याचष्टे, पञ्च विपर्य्यया इति।—अविद्या तावद्विपर्य्यय एव, अस्मितादयोऽप्यविद्योपादानात्तदविनाभाववर्त्तिन इति विपर्य्ययाः, ततश्चाविद्यासमुच्छेदे तेषामपि समुच्छेदो युक्त इति भावः। तेषामुच्छेत्तव्यताहेतुं संसारकारणत्वमाह, ते इति।—स्यन्दमानाः समुदाचरन्तो गुणानामधिकारं द्रढ़यन्ति बलवन्तं कुर्व्वन्ति, अत एव परिणाममवस्थापयन्ति, अव्यक्तमहदहङ्कारपरम्परया हि कार्य्यकारणस्रोत उन्नमयन्ति उद्भावयन्ति। यदर्थं सर्वमेतत् कुर्व्वन्ति तत् दर्शयति, परस्पर इति।—कर्मणां विपाकः जात्यायुर्भोगलक्षणः पुरुषार्थः, तममी क्लेशा अभिनिर्हरन्ति निष्पादयन्ति। किं प्रत्येकं निष्पादयन्ति? नेत्याह, परस्परानुग्रह इति।—कर्मभिः क्लेशाः, क्लेशैश्च कर्माणीति ॥ ३ ॥

हेयानां क्लेशानामविद्यामूलत्वं दर्शयति—अविद्या क्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नो-दाराणाम्।

तत्र का प्रसुप्तिः? इति। स्वोचितामर्थक्रियाम् अकुर्वतां क्लेशानां सद्भावेन प्रमाणमस्तीत्यभिप्रायः। पृच्छतः उत्तरमाह, चेतसि इति।—सा नामार्थक्रियां काङ्क्ष-

प्रबोध आलम्बने सम्मुखीभावः, प्रसङ्ख्यानवतो दग्धक्लेशवीजस्य सम्मुखीभूतेऽप्यालम्बने नासौ पुनरस्ति, दग्धवीजस्य कुतः प्ररोहः ? इति, अतः क्षीणक्लेशः कुशलश्चरमदेह इत्युच्यते, तत्रैव सा दग्धवीजभावा पञ्चमी क्लेशावस्था नान्यत्रेति, सतां क्लेशानां तदा वीजसामर्थ्यं दग्धमिति विषयस्य सम्मुखीभावेऽपि सति न भवत्येषां प्रबोधः, इत्युक्ता प्रसुप्तिर्दग्धवीजानामप्ररोहश्च । तनुत्वमुच्यते, प्रतिपक्षभावनोपहताः क्लेशास्तनवो भवन्ति । तथा विच्छिद्य विच्छिद्य तेन तेन आत्मना पुनः समुदाचरन्ति इति विच्छिन्नाः, कथम् ? रागकाले क्रोधस्य अदर्शनात्, न हि रागकाले क्रोधः समुदाचरति, रागश्च क्वचित् दृश्यमानो न विषयान्तरे नास्ति,

क्लेशाः, विदेहप्रकृतिलयानां वीजभावं प्राप्तास्तु ते शक्तिमात्रेण सन्ति क्षीर इव दधि न हि विवेकख्यातेरन्यदस्ति कारणं तद्वन्ध्यतायाम्, अतो विदेहप्रकृतिलया विवेकख्यातिविरहिणः प्रसुप्तक्लेशा न यावदवधिकालं प्राप्नुवन्ति, तत्प्राप्तौ तु पुनरावृत्ताः सन्तः क्लेशास्तेषु तेषु विषयेषु सम्मुखीभवन्ति, शक्तिमात्रेण प्रतिष्ठा येषां ते तथोक्ताः, तदनेन उत्पत्तिशक्तिरुक्ता, वीजभावोपगम इति च कार्य्यशक्तिरिति । ननु विवेकख्यातिमतोऽपि क्लेशाः कस्मान्न प्रसुप्ताः ? इत्यत आह, प्रसङ्ख्यानवत इति ।—चरमदेहः न तस्य देहान्तरमुत्पत्स्यते यदपेक्षयाऽस्य देहः पूर्वं इत्यर्थः । नान्यत्र विदेहादिषु इत्यर्थः । ननु सतो नात्यन्तविनाश इति किमिति तदीययोगर्द्धिबलेन विषयसम्मुखीभावे न क्लेशाः प्रबुध्यन्ते ? इत्यत आह, सताम् इति ।—सन्तु क्लेशाः, दग्धास्त्वेषां प्रसङ्ख्यानाग्निना वीजभाव इत्यर्थः । क्लेशप्रतिपक्षः क्रियायोगः तस्य भावनम् अनुष्ठानं तेनोपहतास्तनवः. अथवा सम्यग्ज्ञानम् अविद्यायाः प्रतिपक्षः, भेददर्शनम् अस्मितायाः, माध्यस्थ्यं रागद्वेषयोः, अनुबन्धबुद्धिनिवृत्तिरभिनिवेशस्येति । विच्छित्तिमाह, तथा इति ।—क्लेशानामन्यतमेन समुदाचरताऽभिभवाद्वा अत्यन्तं विषयसेवया वा विच्छिद्य विच्छिद्य तेन तेनात्मना समुदाचरन्ति आविर्भवन्ति वाजीकरणाद्युपयोगेन वाऽभिभावकदौर्बल्येन वेति । वीप्सया विच्छेदसमुदाचारयोः पौनःपुन्यं दर्शयता यथोक्तात् प्रसुप्तात् भेद उक्तः । रागेण वा समुदाचरता विजातीयः क्रोधोऽभिभूयते, सजातीयेन वा विषयान्तरवर्त्तिना रागेणैव विषयान्तर-

नैकस्यां स्त्रियां चैत्रो रक्त इति अन्यासु स्त्रीषु विरक्त इति, किन्तु तत्र रागो लब्धवृत्तिः अन्यत्र भविष्यद्वृत्तिरिति, स हि तदा प्रसुप्ततनुविच्छिन्नो भवति। विषये यो लब्धवृत्तिः स उदारः। सर्व एवैते क्लेशविषयत्वं नातिक्रामन्ति। कस्तर्हि विच्छिन्नः प्रसुप्तस्तनुरुदारो वा क्लेश इति? उच्यते, सत्यमेवैतत्, किन्तु विशिष्टानामेवैतेषां विच्छिन्नादित्वं यथैव प्रतिपक्षभावनातो निवृत्तस्तथैव स्वव्यञ्जकाञ्जनेन अभिव्यक्त इति. सर्व्व एव अमी क्लेशा अविद्याभेदाः, कस्मात्? सर्वेषु अविद्यैवाभिप्लवते, यदविद्यया वस्तु आकार्य्यते तदेवानुशेरते क्लेशाः, विपर्य्यासप्रत्ययकाले उपलभ्यन्ते क्षीयमाणां चाविद्याम् अनुक्षीयन्त इति॥ ४॥

तत्र अविद्यास्वरूपमुच्यते।

**अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या॥ ५॥**

---

वर्त्ती रागोऽभिभूयत इत्याह—राग इति। भविष्यद्वृत्तेस्त्रयी गतिर्यथायोगं वेदितव्येत्याह, स हि इति।—भविष्यद्वृत्तिक्लेशमात्रपरामर्शि सर्वनाम, न चैवरागपरामर्शि. तस्य विच्छिन्नत्वादेवेति। उदारमाह—विषय इति। ननु उदार एव पुरुषान् क्लिश्नातीति भवतु क्लेशः, अन्ये तु अक्लिश्नन्तः कथं क्लेशाः? इत्यत आह. सर्व एवैते इति।—क्लेशविषयत्वं क्लेशपदवाच्यत्वं, नातिक्रामन्ति उदारतामापद्यमानाः, अत एव तेऽपि हेया इति भावः। क्लेशत्वेनैवैतां मन्यमानश्चोदयति—कस्तर्हि? इति। क्लेशत्वेन समानत्वेऽपि यथोक्तावस्थाभेदाद्विशेष इति परिहरति—उच्यते, सत्यम् इति। स्यादेतत्, अविद्यातो भवन्तु क्लेशाः, तथाऽप्यविद्यानिवृत्तौ कस्मान्निवर्त्तन्ते? न खलु पटः कुविन्दनिवृत्तौ निवर्त्तते इत्यत आह, सर्व एव इति।—भेदा इव भेदास्तदविनिर्भागवर्त्तिन इति यावत्। पृच्छति—कस्मात् इति। उत्तरमाह—सर्वेषु इति। तदेव स्फुटयति, यदिति।—आकार्य्यते समारोप्यते। शेषं सुगमम्। "प्रसुप्तास्तत्त्वलीनानां तन्ववस्थाश्च योगिनाम्। विच्छिन्नोदाररूपाश्च क्लेशा विषयसङ्गिनाम्॥" इति सङ्ग्रहः॥ ४॥

अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्या इति सूत्रम्।—अनित्यत्वोपयोगि विशेषणं कार्य्यम् इति।

अनित्ये कार्य्ये नित्यख्यातिः, तद्यथा, ध्रुवा पृथिवी, ध्रुवा सचन्द्रतारका द्यौः, अमृता दिवौकस इति। तथा अशुचौ परमबीभत्से काये—उक्तञ्च “स्थानाद्वीजादुपष्टम्भान्नि-स्यन्दान्निधनादपि। कायमाधेयशौचत्वात् पण्डिता ह्यशुचिं विदुः॥” इत्यशुचौ शुचिख्यातिर्दृश्यते, नवेव शशाङ्कलेखा कमनीयेयं कन्या मध्वमृतावयवनिर्मितेव चन्द्रं भित्त्वा निःसृतेव ज्ञायते, नीलोत्पलपत्रायताक्षी हावगर्भाभ्यां लोचनाभ्यां जीवलोकमाश्वासयन्तीवेति, कस्य केनाभिसम्बन्धः, भवति चैवमशुचौ शुचिविपर्य्यासप्रत्यय इति। एतेनापुण्ये पुण्य-प्रत्ययस्तथैवानर्थे चार्थप्रत्ययो व्याख्यातः। तथा दुःखे सुखख्यातिं—वक्ष्यति “परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः” इति, तत्र सुखख्यातिरविद्या। तथा अनात्मनि आत्मख्यातिः वाह्योपकरणेषु चेतनाचेतनेषु,

केचित् किल भूतानि नित्यत्वेनाभिमन्यमानास्तद्रूपमभीप्सवस्तान्येवोपासते, एवं धूमादिमार्गानुपासते चन्द्रसूर्य्यतारकाद्युलोकान्नित्यानभिमन्यमानास्तत्प्राप्तये, एवं दिवौकसः देवानमृतानभिमन्यमानास्तद्भावाय सोमं पिबन्ति, आम्नायते हि “अपाम सोममममृता अभूम” इति, सेयमनित्येषु नित्यख्यातिरविद्या। तथाऽशुचौ परमबीभत्से काये—अर्द्धोक्त एव कायबीभत्सतायां वैयासिकीं गाथां पठति, स्थानात् इति।—मातुरुदरं मूत्राद्युपहतं स्थानं, पित्रोर्लोहितरेतसी वीजम्, अशितपीताहाररसादिभाव उपष्टम्भः, तेन हि शरीरं सन्धार्य्यते, निस्यन्दः प्रस्वेदः, निधनञ्च श्रोत्रियशरीरमप्य-पवित्रयति तत्स्पर्शे स्नानविधानात्। ननु यदि शरीरमशुचि कृतं तर्हि मृज्जलादिक्षालने-न? इत्यत आह, आधेयशौचत्वात् इति।—स्वभावेनाशुचेरपि शरीरस्य शौचमाधेयं, सुगन्धितेव कामिनीनामङ्गरागादिति। अर्द्धोक्तं पूरयति, इत्यशुचौ इति।—इत्युक्तेभ्यो हेतुभ्योऽशुचौ शरीर इत्यर्थः। शुचिख्यातिमाह—नवा इति। हावः शृङ्गारजा लीला, कस्य स्त्रीकायस्य परमबीभत्सस्य, केन मन्दतमसा दृश्येन शशाङ्कलेखादिना सम्बन्धः। एतेन अशुचिस्त्रीकाये शुचिख्यातिप्रदर्शनेन, अपुण्ये हिंसादौ, संसार-मोचकादीनां पुण्यप्रत्ययः, एवमर्जनरक्षणादिदुःखबहुलतयाऽनर्थे धनादौ अर्थप्रत्ययो

भोगाधिष्ठाने वा शरीरे, पुरुषोपकरणे वा मनसि, अनात्मनि आत्मख्यातिरिति, तथैतदत्रोक्तं "व्यक्तमव्यक्तं वा सत्त्वमात्मत्वेन अभिप्रतीत्य तस्य सम्पदमनु नन्दति आत्मसम्पदं मन्वानः, तस्य व्यापदमनुशोचति आत्मव्यापदं मन्यमानः, स सर्वोऽप्रतिबुद्धः" इति. एषा चतुष्पदा भवति अविद्या मूलमस्य क्लेशसन्तानस्य कर्माशयस्य च सविपाकस्य इति। तस्याश्चामित्रागोष्पदवत् वस्तुसतत्त्वं विज्ञेयं, यथा नामित्रो मित्राभावो न मित्रमात्रं, किन्तु तद्विरुद्धः सपत्नः, यथा वा अगोष्पदं न गोष्पदा-

व्याख्यातः, सर्वेषां जुगुप्सितत्वेनाशुचित्वात्। तथा दुःख इति।—सुगमम्। तथाऽनात्मनि इति।—सुगमम्। तथैतदत्रोक्तं पञ्चशिखेन, व्यक्तं चेतनं पुत्रदारपश्वादि, अव्यक्तम् अचेतनं शय्यासनाशनादि। स सर्वोऽप्रतिबुद्धः मूढः। चत्वारि पदानि स्थानान्यस्या इति चतुष्पदा। नन्वन्या अपि दिङ्मोहालातचक्रादिविषयाऽनन्तपदाऽविद्या, तत् किमुच्यते चतुष्पदा? इत्यत आह, मूलमस्य इति।—सन्तु नामान्या अप्यविद्याः, संसारबीजं चतुष्पदैवेति। नन्वविद्येति नञ्समासः पूर्वपदार्थप्रधानो वा स्यात् यथा अमक्षिकमिति? उत्तरपदार्थप्रधानो वा यथा अराजपुरुष इति? अन्यपदार्थप्रधानो वा यथा अमक्षिको देश इति? तत्र पूर्वपदार्थप्रधानत्वे विद्यायाः प्रसज्यप्रतिषेधो गम्येत, न चास्य क्लेशादिकारणत्वम्. उत्तरपदार्थप्रधानत्वे वा विद्यैव कस्यचिदभावेन विशिष्टा गम्येत, सा च क्लेशादिपरिपन्थिनी न तु तद्बीजं, न हि प्रधानोपघाती प्रधानगुणो युक्तः, तदनुपघाताय गुणे त्वन्याय्यकल्पना, तस्माद्विद्यास्वरूपानुपघाताय नञोऽन्यथाकरणम् अध्याहारो वा निषेधस्येति, अन्यपदार्थप्राधान्ये त्वविद्यमानविद्या बुद्धिर्वक्तव्या. न चासौ विद्याया अभावमात्रेण क्लेशादिबीजं विवेकख्यातिपूर्वकनिरोधसम्पन्नाया अपि तथात्वप्रसङ्गात्; तस्मात् सर्वथैवाविद्याया न क्लेशादिमूलतेत्यत आह, तस्याश्च इति।—वस्तुनो भावो वस्तुसतत्त्वं वस्तुत्वमित्यर्थः, तदनेन न प्रसज्यप्रतिषेधो नापि विद्यैवाविद्या नापि तदभावविशिष्टा बुद्धिः, अपि तु विद्याविरुद्धं विपर्य्ययज्ञानमविद्येत्युक्तं. लोकाधीनावधारणो हि शब्दार्थसम्बन्धः, लोके चोत्तरपदार्थप्रधानस्यापि नञः उत्तरपदाभिधेयोपमर्दकस्य तद्विपरीततद्विरुद्धपरतया तत्र तत्रोपलब्धेरिहापि तद्विरुद्धे वृत्तिरिति भावः। दृष्टान्तं विभजते, यथा नामित्र इति।—न मित्राभावः, नापि मित्रमात्रमित्यस्यानन्तरं

भावो न गोष्पदमात्रं, किन्तु देश एव ताभ्यामन्यत् वस्त्वन्तरम्, एवमविद्या न प्रमाणं न प्रमाणाभावः, किन्तु विद्याविपरीतं ज्ञानान्तरमविद्येति ॥ ५ ॥

**दृग्दर्शनशक्त्योरेकात्मतेवास्मिता ॥ ६ ॥**

पुरुषो दृक्शक्तिर्बुद्धिर्दर्शनशक्तिरित्येतयोः एकस्वरूपापत्तिरिवास्मिताक्लेश उच्यते। भोक्तृभोग्यशक्त्योः अत्यन्तविभक्तयोरत्यन्तासङ्कीर्णयोरविभागप्राप्ताविव सत्यां भोगः कल्पते, स्वरूपप्रतिलम्भे तु तयोः कैवल्यमेव भवति, कुतो भोगः ? इति। तथाचोक्तं "बुद्धितः परं पुरुषमाकारशीलविद्यादिभिर्विभक्तमपश्यन् कुर्य्यात्तत्रात्मबुद्धिं मोहेन" इति। ६ ॥

---

वस्त्वन्तरं, किन्तु तद्विरुद्धः सपक्ष इति वक्तव्यम्। तथाऽगोष्पदमिति न गोष्पदाभावो न गोष्पदमात्रं, किन्तु देश एव विपुलो गोष्पदविरुद्धः ताभ्याम् अभावगोष्पदाभ्यामन्य इति अर्थाद्वस्त्वन्तरम्। दार्ष्टान्तिके योजयति—एवम् इति ॥ ५ ॥

अविद्यामुक्त्वा तस्याः कार्य्यमस्मितां रागादिवरिष्ठामाह, दृग्दर्शनशक्त्योरेकात्मतेवास्मिता इति।—दृक् च दर्शनञ्च ते एव शक्ती तयोरात्माऽनात्मनोः अनात्मनि आत्मज्ञानलक्षणाऽविद्यापादिता या एकात्मतेव एकार्थतेव, न तु परमार्थत एकात्मता साऽस्मिता। दृग्दर्शनयोरिति वक्तव्ये तयोर्भोक्तृभोग्ययोग्यतालक्षणं सम्बन्धं दर्शयितुं शक्तिग्रहणम्।

सूत्रं विवृणोति—पुरुष इति। ननु अनयोरभेदप्रतीतेरभेद एव कस्मान्न भवति ? कुतश्चैकत्वं क्लिश्नाति पुरुषम् ? इत्यत आह, भोक्तृभोग्यशक्त्योः इति।—भोक्तृशक्तिः पुरुषः, भोग्यशक्तिः बुद्धिः, तयोरत्यन्तविभक्तयोः। कुतोऽत्यन्तविभक्तत्वम् ? इत्यत आह, अत्यन्तासङ्कीर्णयोः इति।—अपरिणामित्वादिधर्मकः पुरुषः, परिणामित्वादिधर्मिका बुद्धिरित्यसङ्कीर्णता, तदनेन प्रतीयमानोऽप्यभेदो न पारमार्थिक इत्युक्तम्। अविभागेति।—क्लेशत्वमुक्तम्। अन्वयं दर्शयित्वा व्यतिरेकमाह, स्वरूप इति।—प्रतिलम्भः विवेकख्यातिः। परस्याप्येतत् सम्मतमित्याह, तथा चोक्तं पञ्चशिखेन बुद्धित इति।—आकारः स्वरूपं, सदा विशुद्धिः, शीलम् औदासीन्यं, विद्या चैतन्यं, बुद्धिरविशुद्धा अनुदासीना जड़ा चेति, तत्रात्मबुद्धिरविद्या, मोहः पूर्वाविद्याजनितः संस्कारः, तमो वा, अविद्यायास्तामसत्वादिति ॥ ६ ॥

**सुखानुशयी रागः ॥ ७ ॥**

सुखाभिज्ञस्य सुखानुस्मृतिपूर्वः सुखे तत्साधने वा यो गर्द्धस्तृष्णा लोभः स राग इति ॥ ७ ॥

**दुःखानुशयी द्वेषः ॥ ८ ॥**

दुःखाभिज्ञस्य दुःखानुस्मृतिपूर्वो दुःखे तत्साधने वा यः प्रतिघो मन्युर्जिघांसा क्रोधः स द्वेष इति ॥ ८ ॥

**स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः ॥ ९ ॥**

सर्वस्य प्राणिन इयमात्माऽऽशीर्नित्या भवति मा न भूवं भूयासमिति, न चाननुभूतमरणधर्मकस्यैषा भवति आत्माऽऽशीः, एतया च पूर्वजन्मानुभवः प्रतीयते, स चायमभि-

---

विवेकदर्शने रागादीनां विनिवृत्तेरविद्याऽऽपादिताऽस्मिता रागादीनां निदानमित्यस्मिताऽनन्तरं रागादीन् लक्षयति—सुखानुशयी रागः ।

सुखानभिज्ञस्य स्मृतेरभावात् सुखाभिज्ञस्येत्युक्तम् । स्मर्यमाणे सुखे रागः सुखानुस्मृतिपूर्वकः, अनुभूयमाने तु सुखे नानुस्मृतिमपेक्षते, तत्साधने तु स्मर्यमाणे दृश्यमाने वा सुखानुस्मृतिपूर्व एव राग, दृश्यमानमपि हि सुखसाधनं तज्जातीयस्य सुखहेतुतां स्मृत्वा तज्जातीयतया चास्य सुखहेतुमनुमायेच्छति । अनुशयीति पदार्थमाह—य इति ॥ ७ ॥

दुःखानुशयी द्वेषः ।

दुःखाभिज्ञस्येति पूर्ववत् व्याख्येयम । अनुशयिपदार्थमाह, यः प्रतिघ इति ।—प्रतिहन्तीति प्रतिघः । एतदेव पर्य्यायैर्विवृणोति—मन्युः इति ॥ ८ ॥

स्वरसवाही विदुषोऽपि तथा रूढोऽभिनिवेशः ।

अभिनिवेशपदार्थं व्याचष्टे, सर्व्वस्य प्राणिन इति ।—इयमात्माऽऽशीः आत्मनि प्रार्थना, मा न भूवं मा अभावी भूवं, भूयास जीव्यासमिति, न चाननुभूतमरणधर्म्मकस्य अननुभूतो मरणधर्म्मो येन जन्तुना तस्यैवं भवत्यात्माऽऽशीः । अभिनिवेशो मरणभयम । प्रसङ्गतो जन्मान्तरं प्रत्याचक्षाणं नास्तिकं निराकरोति, एतया इति ।—प्रत्युदितस्य शरीरस्य म्रियमाणत्वात् पूर्व्वजन्मानुभवः प्रतीयते निकाय-

निवेशः क्लेशः स्वरसवाही क्रमेरपि जातमात्रस्य प्रत्यक्षानुमानागमैरसम्भावितो मरणत्रास उच्छेददृष्ट्यात्मकः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति। यथा चायमत्यन्तमूढेषु दृश्यते क्लेशस्तथा विदुषोऽपि विज्ञातपूर्वापरान्तस्य रूढः, कस्मात्? समाना हि तयोः कुशलाकुशलयोः मरणदुःखानुभवादियं वासनेति ॥ ९ ॥

---

विशिष्टाभिरपूर्वाभिर्देहेन्द्रियवेदनाभिरभिसम्बन्धो जन्म तस्यानुभवः प्राप्तिः सा प्रतीयते। कथमित्यत आह—स चायमभिनिवेश इति। अर्द्धोक्तावेवास्य क्लेशत्वमाह, क्लेश इति।—अयमहितकर्मादिना जन्तून् क्लिश्नाति दुःखाकरोति इति क्लेशः। वक्तुमुपक्रान्तं परिसमापयति, स्वरसवाही इति।—स्वभावेन वासनारूपेण वहनशीलः, न पुनरागन्तुकः। क्रमेरपि जातमात्रस्य दुःखबहुलस्य निकृष्टतमचैतन्यस्य। अनागन्तुकत्वे हेतुमाह, प्रत्यक्ष इति।—प्रत्यक्षानुमानागमैः प्रत्युदिते जन्मनि असम्भावितः असम्पादितः पूर्वजन्मानुभूतं मरणदुःखमनुमापयति। अयमभिसन्धिः,— जातमात्र एव हि बालको मारकवस्तुदर्शनात् वेपमानः कम्पविशेषादनुमितमरणप्रत्ययासत्तिस्त्रवो बिभ्यदुपलभ्यते, दुःखात् दुःखहेतोश्च भयं दृष्टं, न चास्मिन् जन्मनि अनेन मरणमनुभूतमनुमितं श्रुतं वा प्राणिनास्य दुःखत्वं वा अवगम्यते, तस्मात्तस्य तथाभूतस्य स्मृतिः परिशिष्यते, न चेयं संस्काराद्दृते, न चायं संस्कारोऽनुभवं विना, न चास्मिन् जन्मन्यनुभवः इति प्राग्भवीयः परिशिष्यते इत्यासीत् पूर्व्वजन्मसम्बन्ध इति। तथा-पदं यथा-पदमाकाङ्क्षत इत्यर्थप्राप्ते यथा-पदे सति यादृशो वाक्यार्थो भवति तादृशं दर्शयति, यथा चायम् इति।—अत्यन्तमूढेषु मन्दतमचैतन्येषु। विद्वत्तां दर्शयति, विज्ञातपूर्वापरान्तस्य इति।—अन्तः कोटिः, पुरुषस्य हि पूर्वा कोटिः संसारः, उत्तरा कैवल्यं, सैव विज्ञाता श्रुतानुमानाभ्यां येन स तथोक्तः, सोऽयं मरणत्रासः आ क्रमेरा च विदुषो रूढः प्रसिद्ध इति। ननु अविदुषो भवतु मरणत्रासो विदुषस्तु न सम्भवति विद्ययोन्मूलितत्वात्? अनुन्मूलने वा अस्य मरणत्रासस्य स्यादत्यन्तसत्त्वम्? इत्याशयवान् पृच्छति—कस्मात् इति। उत्तरं, समाना हि इति।—न सम्प्रज्ञातवान् विद्वान्, अपि तु श्रुतानुमानविवेकी इति भावः ॥ ९ ॥

**ते प्रतिप्रसवहेयाः सूक्ष्माः ॥ १० ॥**

ते पञ्च क्लेशा दग्धबीजकल्पा योगिनश्चरिताधिकारे चेतसि प्रलीने सह तेनैव अस्तं गच्छन्ति ॥ १० ॥

स्थितानान्तु बीजभावोपगतानां—

**ध्यानहेयास्तद्वृत्तयः ॥ ११ ॥**

क्लेशानां या वृत्तयः स्थूलास्ताः क्रियायोगेन तनूकृताः सत्यः प्रसङ्ख्यानेन ध्यानेन हातव्या, यावत् सूक्ष्मीकृता यावत् दग्धबीजकल्पा इति। यथा च वस्त्राणां स्थूलो मलः पूर्वं निर्धूयते पश्चात् सूक्ष्मो यत्नेनोपायेन च अपनीयते, तथा स्वल्पप्रतिपक्षाः स्थूला वृत्तयः क्लेशानां, सूक्ष्मास्तु महाप्रतिपक्षा इति ॥ ११ ॥

---

तदेवं क्लेशा लक्षिताः, तेषाञ्च हेयानां प्रसुप्ततनुविच्छिन्नोदाररूपतया चतस्रोऽवस्था दर्शिताः, कस्मात् पुनः पञ्चमी क्लेशावस्था दग्धबीजभावतया सूक्ष्मा न सूत्रकारेण कथिता ? इत्यत आह, ते प्रतिप्रसवहेयाः सूक्ष्माः ।—यत् किल पुरुषप्रयत्नगोचरः तदुपदिश्यते, न च सूक्ष्मावस्था हानप्रयत्नगोचरः, किन्तु प्रतिप्रसवेन कार्य्यस्य चित्तस्याश्मितालक्षणकारणभावापत्त्या हातव्येति ।

व्याचष्टे, ते इति ।—सुगमम् ॥ १० ॥

अथ क्रियायोगतनूकृतानां क्लेशानां किं विषयात् पुरुषप्रयत्नात् हानम् ? इत्यत आह, स्थितानान्तु बीजभावोपगतानाम् इति ।—अनेन वन्ध्येभ्यो व्यवच्छिनत्ति ।

सूत्रं पठति—ध्यानहेयास्तद्वृत्तयः इति ।

व्याचष्टे, क्लेशानाम् इति ।—क्रियायोगतनूकृता अपि हि प्रतिप्रसवहेतुभावेन कार्य्यतः स्वरूपतश्च शक्या उच्छेत्तुमिति स्थूला उक्ताः । पुरुषप्रयत्नस्य प्रसङ्ख्यानगोचरस्यावधिमाह—यावत् इति। सूक्ष्मीकृता इति विवृणोति—दग्ध इति। अत्रैव दृष्टान्तमाह, यथा च वस्त्राणाम् इति ।—यत्नेन तत्चालनादिना, उपायेन क्षारसंयोगादिना । स्थूलसूक्ष्मतामात्रतया दृष्टान्तदार्ष्टान्तिकयोः साम्यं, न पुनः प्रयत्नापनेयतया, प्रतिप्रसवहेयेषु तदसम्भवात्। स्वल्पः प्रतिपक्षः उच्छेदहेतुर्यासां तास्तथोक्ताः। महान् प्रतिपक्ष उच्छेदहेतुर्यासां तास्तथोक्ताः, प्रतिप्रसवस्य चाधस्तात् क्लेशोच्छेदसाधकं स्यात् प्रसङ्ख्यानमित्यवरतया स्वल्पत्वमुक्तम् ॥ ११ ॥

**क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः॥ १२॥**

तत्र पुण्यापुण्यकर्माशयः कामलोभमोहक्रोधप्रसवः। स दृष्टजन्मवेदनीयश्चादृष्टजन्मवेदनीयश्च, तत्र तीव्रसंवेगेन मन्त्रतपःसमाधिभिर्निर्वर्त्तितः ईश्वरदेवतामहर्षिमहानुभावानामाराधनाद्वा यः परिनिष्पन्नः स सद्यः परिपच्यते पुण्यकर्माशय इति। तथा तीव्रक्लेशेन भीतव्याधितकृपणेषु विश्वासोपगतेषु वा महानुभावेषु वा तपस्विषु कृतः पुनः पुनरपकारः स चापि पापकर्माशयः सद्य एव परिपच्यते। यथा नन्दीश्वरः कुमारो मनुष्यपरिणामं हित्वा देवत्वेन परिणतः, तथा नहुषोऽपि देवानामिन्द्रः स्वकं परिणामं हित्वा तिर्य्यक्त्वेन परिणत इति। तत्र नारकाणां नास्ति दृष्टजन्मवेदनीयः कर्माशयः, क्षीणक्लेशानामपि नास्ति अदृष्टजन्मवेदनीयः कर्माशय इति॥ १२॥

---

स्यादेतत्, जात्यायुर्भोगहेतवः क्लिश्नन्तः क्लेशाः, कर्माशयश्च तथा, न तु अविद्यादयः, तत् कथमविद्यादयः क्लेशाः? इत्यत आह, क्लेशमूलः कर्माशयो दृष्टादृष्टजन्मवेदनीयः।—क्लेशो मूलं यस्योत्पादे च कार्य्यकरणे च स तथोक्तः। एतदुक्तं भवति, अविद्यादिमूलः कर्माशयो जात्यायुर्भोगहेतुरित्यविद्यादयोऽपि तद्धेतवोऽतः क्लेशा इति।

व्याचष्टे, तत्र इति।—आशेरते सांसारिकाः पुरुषा अस्मिन्नित्याशयः, कर्मणामाशयो धर्माधर्मौ कामात् काम्यकर्मप्रवृत्तौ स्वर्गादिहेतुर्धर्मो भवति, एवं लोभात् परद्रव्यापहारादावधर्मः, एवं मोहादधर्मे हिंसादौ धर्मबुद्धेः प्रवर्त्तमानस्याधर्म एव, न तु अस्ति मोहजो धर्मः, अस्ति क्रोधजो धर्मः, तद्यथा ध्रुवस्य जनकावमानजन्मनः क्रोधात् तज्जिगीषया आहितेन कर्माशयेन पुण्येनान्तरिक्षलोकवासिनामुपरि स्थानं, अधर्मस्तु क्रोधजो ब्रह्मवधादिजन्मा प्रसिद्ध एव भूतानाम्। तस्य द्वैविध्यमाह—स दृष्टजन्मवेदनीयश्च इति। दृष्टजन्मवेदनीयमाह—तीव्रसंवेगेन इति। यथासङ्ख्येन दृष्टान्तावाह—

सति मूले तद्विपाको जात्यायुर्भोगाः ॥१३॥

सत्सु क्लेशेषु कर्माशयो विपाकारम्भी भवति, नोच्छिन्नक्लेशमूलः। यथा तुषावनद्धाः शालितण्डुला अदग्धबीजभावा प्ररोहसमर्था भवन्ति, नापनीततुषा दग्धबीजभावा वा, तथा क्लेशावनद्धः कर्माशयो विपाकप्ररोही भवति नापनीतक्लेशो न प्रसङ्ख्यानदग्धक्लेशबीजभावो वेति। स च विपाकस्त्रिविधो जातिरायुर्भोग इति। तत्रेदं विचार्य्यते, किमेकं कर्म एकस्य जन्मनः कारणम्? अथैकं कर्म अनेकं जन्म आक्षिपति? इति ; द्वितीया विचारणा—किमनेकं कर्म अनेकं जन्म निर्वर्त्तयति? अथ अनेकं कर्मैकं जन्म निर्वर्त्तयति? इति। न तावदेकं

---

यथा नन्दीश्वर इति। तत्र नारकाणामिति।—येन कर्माशयेन कुम्भीपाकादयो नरकभेदाः प्राप्यन्ते तत्कारिणो नारकाः, तेषां नास्ति दृष्टजन्मवेदनीयः कर्माशयः, न हि मनुष्यशरीरेण तत्परिणामभेदेन वा सा तादृशी वत्सरसहस्रादिनिरन्तरोपभोग्या वेदना सम्भवति इति। शेषं सुगमम् ॥ १२ ॥

स्यादेतत्, अविद्यामूलत्वे कर्माशयस्य विद्योत्पादे सत्यविद्याविनाशान्मा नाम कर्माशयान्तरं चैषीत्, प्राक्तनकर्माशयानामनादिभवपरम्परासञ्चितानामसङ्ख्यातानामनियतविपाककालानां भोगेन क्षपयितुमशक्यत्वादशक्योच्छेदः संसारः स्यात्? इत्यत आह, सति मूले तद्विपाको जात्यायुर्भोगाः इति।—एतदुक्तं भवति—सुखदुःखफलो हि कर्माशयस्तादर्थ्येन तन्नान्तरीयकतया जन्मायुषी अपि प्रसूते, सुखदुःखे च रागद्वेषानुषक्ते तदविनिर्भागवर्त्तिनी तदभावे न भवतः, न चास्ति सम्भवो न च तत्र यस्तुष्यति वा उद्विजते वा तत्र तस्य सुखं वा दुःखं वेति, तदियमात्मभूमिः क्लेशसलिलावसिक्ता कर्मफलप्रसवक्षेत्रमित्यस्ति क्लेशानां फलोपजननेऽपि कर्माशयसहकारितेति, क्लेशसमुच्छेदे सहकारिवैकल्यात् सन्नप्यनन्तोऽप्यनियतविपाककालोऽपि प्रसङ्ख्यानदग्धबीजभावो न फलाय कल्पत इति।

उक्तमर्थं भाष्यमेव द्योतयति।—सत्सु इति। अत्रैव दृष्टान्तमाह, यथा तुष इति।—सतुषा अपि दग्धबीजभावाः स्वेदादिभिः। दार्ष्टान्तिके योजयति—तथा इति। ननु न क्लेशाः शक्या अपनेतुं, न हि सतामपनयः? इत्यत आह—न प्रसङ्ख्यानदग्धक्लेशबीजभावो वा इति। विपाकस्य वैविध्यमाह, स च इति।—विपच्यते

कर्मैकस्य जन्मन: कारणं, कस्मात्? अनादिकालप्रचितस्य असङ्ख्येयस्यावशिष्टकर्मण: साम्प्रतिकस्य च फलक्रमानियमाद- नाश्वासो लोकस्य प्रसक्त:, स चानिष्ट इति। न चैकं कर्मानेकस्य जन्मन: कारणं, कस्मात्? अनेकेषु कर्मसु एकैकमेव कर्मानेकस्य जन्मन: कारणमित्यवशिष्टस्य विपाककालाभाव: प्रसक्त:, स चाप्यनिष्ट इति। न चानेकं कर्मानेकस्य जन्मन: कारणं, कस्मात्? तदनेकं जन्म युगपन्न सम्भवतीति क्रमेण

---

साध्यते कर्मभिरिति विपाक:। कर्मैकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा प्रथमा विचारणा, द्वितीया तु कर्मानेकत्वं ध्रुवं कृत्वा जन्मैकत्वानेकत्वगोचरा, तदेवं चत्वारो विकल्पा:, तत्र प्रथमं विकल्पमपाकरोति—न तावदेकं कर्मैकस्य जन्मन: कारणम् इति। पृच्छति—कस्मात् इति। उत्तरमाह, अनादि इति।— अनादिकाले एकैकजन्मप्रचितस्य, अत एवासङ्ख्येयस्य. एकैकजन्मचपितादेकस्मात् कर्मणोऽवशिष्टस्य कर्मण:, साम्प्रतिकस्य च फलक्रमानियमादनाश्वासो लोकस्य प्रसक्त: स चानिष्ट इति। एतदुक्तं भवति, कर्मचयस्य विरलत्वात् तदुत्पत्तिबाहुल्याच्चान्योऽन्य- सम्पीड़िताश्च कर्माशया निरन्तरोत्पत्तयो निरुच्छासा: स्वविपाकं प्रतीति न फलक्रम: शक्योऽवधारयितुं प्रेक्षावतेत्यनाश्वास: पुण्यानुष्ठानं प्रति प्रसक्त इति। द्वितीयं विकल्प- मपाकरोति—न चैकं कर्मानेकस्य जन्मन: कारणम् इति। पृच्छति—कस्मात् इति। उत्तरमाह अनेकेषु इति।—अनेकस्मिन् जन्मनि आहितमेकमेव कर्मानेकस्य जन्मलचणस्य विपाकस्य निमित्तमित्यविशिष्टस्य विपाककालाभाव: प्रसक्त:. स चाप्यनिष्ट इति कर्मवैफल्येन तदननुष्ठानप्रसङ्गात्. यदैकजन्मसमुच्छेद्ये कर्मणि एकस्मिन् फल- क्रमानियमादनाश्वासस्तदा क्वैव कथा बहुजन्मसमुच्छेद्ये कर्मणि एकस्मिन्. तत्र ह्यवसराभावात् विपाककालाभाव एव साम्प्रतिकस्येति भाव:। तृतीयं विकल्प- मपाकरोति—न चानेकं कर्मानेकस्य जन्मन: कारणम् इति। तत्र हेतुमाह, तत् इति।—तदनेकं जन्म युगपन्न सम्भवति अयोगिन इति क्रमेण वाच्यं. यदि हि कर्मसहस्रं युगपज्जन्मसहस्रं प्रसुवीत तत एव कर्मसहस्रप्रचयादवशिष्टस्य विपाक- काल: फलक्रमनियमश्च स्यातां. न तु अस्ति जन्मनां यौगपद्यम्, एवमेव प्रथमपच एवोक्तं दूषणमित्यर्थ:। तदेवं पचत्रये निराकृते पारिशेष्यादनेकं कर्मैकस्य जन्मन:

वाच्यं, तथा च पूर्वदोषानुषङ्गः, तस्माज्जन्मप्रायणान्तरे कृतः पुण्यापुण्यकर्माशयप्रचयो विचित्रः प्रधानोपसर्जनभावेनावस्थितः प्रायणाभिव्यक्त एकप्रघट्टकेन मिलित्वा मरणं प्रसाध्य सम्मूर्च्छित एकमेव जन्म करोति, तच्च जन्म तेनैव कर्मणा लब्धायुष्कं भवति, तस्मिन्नायुषि तेनैव कर्मणा भोगः सम्पद्यत इति, असौ कर्माशयो जन्मायुर्भोगहेतुत्वात् त्रिविपाकोऽभिधीयत इति, अत एकभविकः कर्माशय उक्त इति।

दृष्टजन्मवेदनीयस्त्वेकविपाकारम्भी भोगहेतुत्वात्, द्विविपाकारम्भी वा आयुर्भोगहेतुत्वात्, नन्दीश्वरवन्नहुषवद्वा इति। क्लेशकर्मविपाकानुभवनिमित्ताभिस्तु वासनाभिरनादिकाल-

---

कारणमिति पक्षो व्यवतिष्ठत इत्याह, तस्माज्जन्म इति।—जन्म च प्रायणञ्च जन्मप्रायणं, तयोरन्तरं मध्यं तस्मिन्, विचित्रसुखदुःखफलोपहारेण विचित्रः, यद्धत्यन्तमुद्भूतमनन्तरमेव फलं दास्यति तत् प्रधानं, यत्तु विलम्बेन तदुपसर्जनं, प्रायणं मरणं, तेनाभिव्यक्तः स्वकार्य्यारम्भणाभिमुख्यमनुपनीतः, एकप्रघट्टकेन युगपत्, सम्मूर्च्छितः जन्मादिलक्षणे कार्य्ये कर्त्तव्ये एकलोलीभावमापन्नः, एकमेव जन्म करोति नानेकं, तच्च जन्म मनुष्यादिभावः, तेनैव कर्मणा लब्धायुष्कं कालभेदान्नियतजीवनं च भवतीति, तस्मिन्नायुषि तेनैव कर्मणा भोगः सुखदुःखसाक्षात्कारः स्वसम्बन्धितया सम्पद्यत इति, तस्मादसौ कर्माशयो जात्यायुर्भोगहेतुत्वात् त्रिविपाकोऽभिधीयते। औत्सर्गिकमुपसंहरति, अत एकभविकः कर्माशय उक्त इति।—एको भव एकभवः, पूर्व्वकालैक इत्यादिना समासः, एकभवोऽस्यास्तीति मत्वर्थीयष्ठन्। क्वचित् पाठ एकभविक इति, तत्रैकभवशब्दात् भवार्थे ठक्प्रत्ययः, एकजन्मावच्छिन्नमस्य भवनमित्यर्थः।

तदेवमौत्सर्गिकैकभविकस्य त्रिविपाकत्वमुक्त्वा दृष्टजन्मवेदनीयस्यैहिकस्य कर्मणस्त्रिविपाकत्वं व्यवच्छिनत्ति, दृष्ट इति।—नन्दीश्वरस्य खल्वष्टवर्षावच्छिन्नायुषो मनुष्यजन्मनस्तीव्रसंवेगाधिमात्रोपायजन्मा पुण्यभेद आयुर्भोगहेतुत्वात् द्विविपाकः, नहुषस्य तु पार्ष्णिप्रहारविरोधिनाऽगस्त्यस्येन्द्रपदप्राप्तिहेतुनैव कर्म्मणा आयुषो विहितत्वादपुण्यभेदो भोगमात्रहेतुः। ननु यथैकभविकः कर्माशयस्तथा किं क्लेशवासना? भोगानुकूलाश्च कर्म्मविपाकानुभववासनाः? तथा च मनुष्यस्तिर्य्यग्-

सम्मूर्च्छितमिदं चित्तं चित्रीकृतमिव सर्वतो मत्स्यजालं ग्रन्थिभिरिवाततमित्येता अनेकभवपूर्विका वासनाः। यस्त्वयं कर्माशय एष एवैकभविक उक्त इति। ये संस्काराः स्मृतिहेतवस्ता वासनास्ताश्चानादिकालीना इति। यस्त्वसावेकभविकः कर्माशयः स नियतविपाकश्चानियतविपाकश्च। तत्र दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायं नियमः, न त्वदृष्टजन्मवेदनीयस्यानियतविपाकस्य, कस्मात्? यो ह्यदृष्टजन्मवेदनीयोऽनियतविपाकस्तस्य त्रयी गतीः, कृतस्याविपक्वस्य नाशः, प्रधानकर्मणि आवापगमनं वा, नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्थानम् इति। तत्र कृतस्याविपक्वस्य नाशो यथा शुक्लकर्मोदयादिहैव नाशः कृष्णस्य, यत्रेदमुक्तम्—"द्वे द्वे ह वै कर्मणी वेदितव्ये पापकस्यैको राशिः पुण्यकृतोऽपहन्ति। तदिच्छस्व कर्माणि सुकृतानि कर्तुमिहैव ते कर्म कवयो वेदयन्ति"। प्रधानकर्मण्यावाप-

योनिमापन्नो न तज्जातीयोचितं भुञ्जीत? इत्यत आह, क्लेशकर्म इति।—सम्मूर्च्छितम् एकलोलीभावमापन्नम्। धर्माधर्माभ्यां व्यवच्छेत्तुं वासनायाः स्वरूपमाह—ये संस्कारा इति। औत्सर्गिकमेकभविकत्वं क्वचिदपवदितुं भूमिकामारचयति, यस्त्वसौ इति।—तु-शब्देन वासनातो व्यवच्छिनत्ति। दृष्टजन्मवेदनीयस्य नियतविपाकस्यैवायम् एकभविकत्वनियमः, न तु अदृष्टजन्मवेदनीयस्य किम्भूतस्य अनियतविपाकस्येति। हेतुं पृच्छति—कस्मात् इति। हेतुमाह—यो हि इति। एकां तावत् गतिमाह—कृतस्य इति। द्वितीयामाह—प्रधान इति। तृतीयामाह—नियत इति। तत्र प्रथमां विभजते, तत्र कृतस्य इति।—सन्न्यासिकर्मभ्योऽशुक्लाकृष्णेभ्योऽन्यानि त्रीण्येव कर्माणि कृष्ण-शुक्ल-कृष्णशुक्लानि, तदिह तपःस्वाध्यायादिसाध्यः शुक्लकर्माशयः उदित एव अदत्तफलस्य कृष्णस्य नाशकः, अविशेषाच्च शबलस्यापि कृष्णभागयोगादिति मन्तव्यम्। तत्रैव भगवानाम्नायमुदाहरति, यत्रेदम् इति।—द्वे द्वे ह वै कर्मणी कृष्ण-कृष्णशुक्ले अपहन्तीति सम्बन्धः, वीप्सया भूयिष्ठता सूचिता। कस्येत्यत आह, पापकस्य इति।—पापकस्य पुंस इत्यर्थः। कोऽसावपहन्ति? इत्यत आह, एको राशिः पुण्यकृतः इति।—समूहस्य समूहिसाध्य-

गमनं यत्रेदमुक्तं, "स्यात् स्वल्पः सङ्करः सपरिहारः सप्रत्यवमर्षः, कुशलस्य नापकर्षायालं, कस्मात्? कुशलं हि मे बह्वन्यदस्ति यत्रायमावापं गतः स्वर्गेऽपि अपकर्षमल्पं करिष्यति" इति।

नियतविपाकप्रधानकर्मणाऽभिभूतस्य वा चिरमवस्था-

त्वात् तदनेन शुक्लः कर्माशयस्तृतीय उक्तः। एतदुक्तं भवति—ईदृशो नामाय परपीड़ादिरहितसाधनसाध्यः शुक्लः कर्माशयः यदेकोऽपि सन् कृष्णान् कृष्ण-शुक्लांश्चात्यन्तविरोधिनः कर्माशयान् भूयसोऽपि हन्ति। तत् तस्मात्, इच्छस्वेति छान्दसत्वादात्मनेपदम्। शेषं सुगमम्। अत्र च शुक्लकर्मोदयस्यैव स कोऽपि महिमा यत इतरेषामभावः, न तु स्वाध्यायादिजन्मनो दुःखात्, न हि दुःखमात्रविरोध्यधर्मोऽपि तु स्वकार्य्यदुःखविरोधी, न च स्वाध्यायादिजन्यं दुःखं तत्कार्य्यं, तत्कार्य्यत्वे स्वाध्यायादिविधानानर्थक्यात्, तद्बलादेव तदुत्पत्तेः, अनुत्पत्तौ वा कुम्भीपाकाद्यपि विधीयेत, अविधाने तदनुत्पत्तेरिति सर्वं चतुरस्रम्। द्वितीयां गतिं विभजते, प्रधान इति।—प्रधाने कर्मणि ज्योतिष्टोमादिके तदङ्गस्य पशुहिंसादेरावापगमनं, द्वे खलु हिंसादेः कार्य्ये, प्रधानाङ्गत्वेन विधानात् तदुपकारः, "न हिंस्यात् सर्वा भूतानि" इति हिंसायाः निषिद्धत्वादनर्थश्च, तत्र प्रधानाङ्गत्वेनानुष्ठानादप्रधानतैवेत्यतो न द्रागित्येव प्रधाननिरपेक्षा सती स्वफलमनर्थं प्रसोतुमर्हति, किन्तु आरब्धविपाके प्रधाने साहायकमाचरन्ती व्यवतिष्ठते, प्रधानसाहायकमाचरन्त्याश्च स्वकार्य्ये बीजमात्रतया अवस्थानं प्रधाने कर्मणि आवापगमनम्। यत्रेदमुक्तं पञ्चशिखेन, स्वल्पः सङ्करः ज्योतिष्टोमादिजन्मनः प्रधानापूर्वस्य पशुहिंसादिजन्मनाऽनर्थहेतुनाऽपूर्वेण, सपरिहारः शक्यो हि कियता प्रायश्चित्तेन परिहर्त्तुम्, अथ प्रमादतः प्रायश्चित्तमपि नाचरितं प्रधानकर्मविपाकसमये विपच्यते, तथाऽपि यावन्तमसावनर्थं प्रसूते तावान् सप्रत्यवमर्षः, मृष्यन्ते हि पुण्यसम्भारोपनीतसुखसुधामहाह्रदावगाहिनः कुशलाः पापमात्रोपपादितां दुःखवह्निकणिकाम्, अतः कुशलस्य महतः पुण्यस्य, नापकर्षाय प्रक्षयाय, अलं पर्य्याप्तः। पृच्छति—कस्मात् इति। उत्तरं, कुशलम् इति।—कुशलं हि मे पुण्यवतो बह्वन्यदस्ति प्रधानकर्मविपाकतया व्यवस्थितं दीक्षणीयादि दक्षिणान्तं, यत्रायं सङ्करः स्वल्पः, स्वर्गेऽपि अस्य फले, सङ्कीर्णपुण्यलब्धजन्मनः स्वर्गात् सर्वथा दुःखेनापरामृष्टात् अपकर्षम् अल्पम् अल्पदुःखसम्भेदं करिष्यतीति।

तृतीयां गतिं विभजते, नियत इति।—बलीयस्त्वेनेह प्राधान्यमभिमतं न तु अत्यङ्गितया, बलीयस्त्वञ्च नियतविपाकत्वेनान्यदा अनवकाशत्वात्, अनियतविपाकस्य

नम्; कथमिति? अदृष्टजन्मवेदनीयस्यैव नियतविपाकस्य कर्मणः समानं मरणमभिव्यक्तिकारणमुक्तं, न त्वदृष्टजन्मवेदनीयस्य अनियतविपाकस्य, यत्तु अदृष्टजन्मवेदनीयं कर्मानियतविपाकं तन्नश्येत्, आवापं वा गच्छेत्, अभिभूतं वा चिरमप्युपासीत यावत् समानं कर्माभिव्यञ्जकं निमित्तमस्य न विपाकाभिमुखं करोति, इति तद्विपाकस्यैव देशकालनिमित्तानवधारणादियं कर्मगतिर्विचित्रा दुर्विज्ञाना चेति, न चोत्सर्गस्यापवादान्निवृत्तिरिति एकभविकः कर्माशयोऽनुज्ञायत इति ॥ १३ ॥

**ते ह्लादपरितापफलाः पुण्या: (?) पुण्यापुण्यहेतुत्वात् ॥ १४ ॥**

ते जन्मायुर्भोगाः, पुण्यहेतुकाः सुखफलाः, अपुण्यहेतुका

---

तु दौर्बल्यमन्यदा सावकाशत्वात्, चिरमवस्थानं बीजभावमात्रेण, न पुनः प्रधानोपकारतया, तस्य स्वतन्त्रत्वात्। ननु प्रायणेनैकदैव कर्माशयोऽभिव्यज्यत इत्युक्तम्, इदानीञ्च चिरावस्थानमुच्यते, तत् कथं परं पूर्वेण न विरुध्यते? इत्याशयवान् पृच्छति—कथम् इति। उत्तरम्, अदृष्ट इति।—जात्यभिप्रायमेकवचनम्। तदितरस्य गतिमुक्तामवधारयति—यत्त्वदृष्ट इति। शेषं सुगमम् ॥ १३ ॥

उक्ता क्लेशमूलत्वं कर्मणः कर्ममूलत्वञ्च विपाकानाम्, अथ विपाकाः कस्य मूलं येनामी त्यक्तव्याः? इत्यत आह—ते ह्लादपरितापफलाः पुण्यापुण्यहेतुत्वात् इति सूत्रम्।

व्याचष्टे, ते जन्मायुर्भोगा इति।—यद्यपि जन्मायुषोरेव ह्लादपरितापपूर्वभावितया तत्फलत्वं, न तु भोगस्य ह्लादपरितापोदयानन्तरभाविनस्तदनुभवात्मनः, तथाऽप्यनुभाव्यतया भोगतया भोगकर्मतामात्रेण भोगफलत्वमिति मन्तव्यम्। नन्वपुण्यहेतुका जात्यायुर्भोगाः परितापफला भवन्तु हेयाः प्रतिकूलवेदनीयत्वात्, कस्मात् पुनः पुण्यहेतवस्त्यज्यन्ते सुखफला अनुकूलवेदनीयत्वात्, न चैषां प्रति आत्मवेदनीयानुकूलता शक्या सहस्रेणाप्यनुमानागमैः अपाकर्त्तुं, न च ह्लादपरितापौ परस्पराविनाभूतौ, यतो ह्लाद उपादीयमाने

दुःखफला इति। यथा चेदं दुःखं प्रतिकूलात्मकमेवं विषयसुखकालेऽपि दुःखमस्त्येव प्रतिकूलात्मकं योगिनः ॥ १४ ॥

कथं तदुपपद्यते ?

**परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः ॥१५॥**

सर्वस्यायं रागानुविद्धश्चेतनाचेतनसाधनाधीनः सुखानुभव इति तत्रास्ति रागजः कर्माशयः, तथा च द्वेष्टि दुःखसाधनानि मुह्यति चेति द्वेषमोहकृतोऽप्यस्ति कर्माशयः। तथा चोक्तम्—"नानुपहत्य भूतान्युपभोगः सम्भवति" इति हिंसाकृतोऽप्यस्ति शारीरः कर्माशय इति, विषयसुखं

ऽवर्जनीयतया परितापोऽप्यापतेत्, तयोर्भिन्नहेतुत्वात्, भिन्नरूपत्वाच्चेत्यत आह, यथा चेदम् इति।—यद्यपि न पृथग्जनैः प्रतिकूलात्मतया विषयसुखकाले संवेद्यते दुःखं तथाऽपि योगिभिस्तत् संवेद्यते इति ॥ १४ ॥

प्रश्नपूर्वकं तदुपपादनाय सूत्रमवतारयति—कथं तदुपपद्यते इति।

परिणामेत्यादि विवेकिन इत्यन्तं सूत्रम्।—परिणामश्च तापश्च संस्कारश्च एतान्येव दुःखानि तैरिति।

परिणामदुःखतया विषयसुखस्य दुःखतामाह, सर्वस्यायम् इति।—न खलु सुखं रागानुवेधमन्तरेण सम्भवति, न ह्यस्ति सम्भवो न तत्र तुष्यति, तच्च तस्य सुखमिति, रागस्य च प्रवृत्तिहेतुत्वात् प्रवृत्तेश्च पुण्यापुण्योपचयकारित्वात् तत्रास्ति रागजः कर्माशयः, असतोऽनुपजननात्, तदा च सुखं भुञ्जानस्तत्र सक्तो विच्छिन्नावस्थेन द्वेषेण द्वेष्टि दुःखसाधनानि, तानि परिहर्त्तुमशक्तो मुह्यति च, इति द्वेषमोहकृतोऽप्यस्ति कर्माशयः, द्वेषवन्मोहस्यापि विपर्ययापरनाम्नः कर्माशयहेतुत्वमविरुद्धम्। ननु कथं रक्तो द्वेष्टि मुह्यति वा रागकाले द्वेषमोहयोरदर्शनात्? इत्यत आह, तथा चोक्तम् इति।—विच्छिन्नावस्थान् क्लेशान् उपपादयद्भिरस्माभिः, तदनेन वाङ्मनसः प्रवृत्तिजन्मनी पुण्यापुण्ये दर्शिते इति, रागादिजन्मनः कर्त्तव्यमिदमिति मानसस्य सङ्कल्पस्य साभिलाषत्वे वाचनिकत्वस्याप्यविशेषात्। यथाऽऽहुः,—"अभिलाषश्च सङ्कल्पो वाच्यार्थान्नातिरिच्यते" इति। शारीरमपि कर्माशयं दर्शयति, नानुपहत्य इति।—अत एव धर्मशास्त्र-

चाविद्येत्युक्तम्। या भोगेष्विन्द्रियाणां तृप्तेरुपशान्तिस्तत् सुखं, या लौल्यादनुपशान्तिस्तत् दुःखम्। न चेन्द्रियाणां भोगाभ्यासेन वैतृष्ण्यं कर्तुं शक्यं. कस्मात्? यतो भोगाभ्यासमनु विवर्द्धन्ते रागाः, कौशलानि चेन्द्रियाणामिति, तस्मादनुपायः सुखस्य भोगाभ्यास इति, स खल्वयं वृश्चिकविषभीत इवाशीविषेण दष्टो यः सुखार्थी विषयानुवासितो महति दुःखपङ्के निमग्न इति। एषा परिणामदुःखता नाम प्रतिकूला सुखावस्थायामपि योगिनमेव क्लिश्नाति। अथ का तापदुःखता? सर्वस्य द्वेषानुविद्धश्चेतनाचेतनसाधनाधीनस्तापानुभव इति तत्रास्ति द्वेषजः कर्माशयः, सुखसाधनानि च प्रार्थयमानः कायेन वाचा मनसा च परिस्पन्दते, ततः परमनुगृह्णात्युपहन्ति च इति परानुग्रहपीड़ाभ्यां धर्माधर्मौ उपचिनोति, स कर्माशयो लोभान्मोहाच्च भवति. इत्येषा

---

काराः "पञ्च सूना गृहस्थस्य" इत्याहुः। स्यादेतत्, न प्रत्यात्मवेदनीयस्य विषयसुखस्य प्रत्याख्यानमुचितं योगिना, अनुभवविरोधादित्यत आह, विषयसुखञ्चाविद्येत्युक्तम् इति।—चतुर्विधविपर्य्यासलक्षणामविद्यां दर्शयद्भिः इति। नाऽऽपातमात्रमाद्रियन्ते वृद्धाः, अस्ति खलु आपाततो मधुविषसम्पृक्तान्नोपभोगोऽपि सुखानुभवः प्रत्यात्मवेदनीयः, किन्त्वायत्याम् असुखम्। इत्यच्च दर्शितं भगवतैव—"विषयेन्द्रियसंयोगात् यत्तदग्रेऽमृतोपमम्। परिणामे विषमिव तत् सुखं राजसं स्मृतम्॥" इति। चोदयति, या भोगेषु इति।—न वयं विषयाह्लादं सुखमातिष्ठामहे, किन्तु अतृप्यतां पुंसां तत्तद्विषयप्रार्थनया परिक्लिष्टचेतसां तृष्णैव महत् दुःखं, न चेयमुपभोगमन्तरेण शाम्यति, न चास्याः प्रशमो रागाद्यनुविद्ध इति नास्य परिणामदुःखतेति भावः। तृप्तेः तृष्णाक्षयात् हेतोः, इन्द्रियाणामुपशान्तिः अप्रवर्त्तनं विषयेषु इत्यर्थः। एतदेव व्यतिरेकमुखेन स्पष्टयति—या लौल्यात् इति। परिहरति, न चेन्द्रियाणाम् इति।—हेतावनोः प्रयोगः। सत्यं तृष्णाक्षयः सुखमनवद्यं, तस्य तु न भोगाभ्यासो हेतुः, अपि तु तृष्णाया एव तद्विरोधित्वाः. यथाऽऽहुः,—"न जातु कामः कामानामुपभोगेन शाम्यति। हविषा कृष्णवर्त्मेव भूय एवाभिवर्द्धते॥" इति। शेषमतिरोहितम्। तापदुःखतां पृच्छति—अथ का इति। उत्तरमाह, सर्वस्य इति।—सर्व्वजनप्रसिद्धत्वेन तत्स्वरूपप्रपञ्चमकृत्वा तापदुःखता

तापदुःखता उच्यते। का पुनः संस्कारदुःखता? सुखानुभवात् सुखसंस्काराशयः, दुःखानुभवादपि दुःखसंस्काराशय इति, एवं कर्मभ्यो विपाकेऽनुभूयमाने सुखे दुःखे वा पुनः कर्माशयप्रचय इति। एवमिदमनादि दुःखस्रोतो विप्रसृतं योगिनमेव प्रतिकूलात्मकत्वादुद्वेजयति, कस्मात्? अक्षिपात्रकल्पो हि विद्वानिति, यथोर्णातन्तुरक्षिपात्रे न्यस्तः स्पर्शेन दुःखयति नान्येषु गात्रावयवेषु, एवमेतानि दुःखानि अक्षिपात्रकल्पं योगिनमेव क्लिश्नन्ति नेतरं प्रतिपत्तारम्। इतरन्तु स्वकर्मोपहृतं दुःखमुपात्तम् उपात्तम् त्यज्यन्तम् त्यक्तं त्यक्तमुपाददानमनादिवासनाविचित्रया चित्तवृत्त्या समन्ततोऽनुविद्धमिवाविद्यया हातव्य एवाहङ्कार-ममकारानुपातिनं जातं जातं बाह्याध्यात्मिकोभयनिमित्तास्त्रिपर्वाणस्तापा अनुप्लवन्ते। तदेवमनादिदुःखस्रोतसा व्युह्यमानमात्मानं भूतग्रामञ्च दृष्ट्वा योगी सर्वदुःखक्षयकारणं सम्यग्दर्शनं शरणं प्रपद्यत इति। "गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" प्रख्याप्रवृत्तिस्थितिरूपा बुद्धिगुणाः परस्परानुग्रहतन्त्रो भूत्वा शान्तं

---

ऽपि परिणामदुःखतासमतया प्रपञ्चितेति। संस्कारदुःखतां पृच्छति—का इति। उत्तरं, सुखानुभवात् इति।—सुखानुभवो हि संस्कारमाधत्ते स च सुखस्मरणं, तच्च रागं स च मनःकायवचनचेष्टां, सा च पुण्यापुण्ये, ततो विपाकानुभवः. ततो वासनेत्येवमनादिता इति। अत्र च सुखदुःखसंस्काराशयात्तत् स्मरणं, तस्माच्च रागद्वेषौ, ताभ्यां कर्माणि, कर्मभ्यो विपाक इति योजना। तदेवं दुःखस्रोत प्रसृतं योगिनमेव क्लिश्नाति, नेतरं पृथग्जनमित्याह—एवमिदमनादि इति। इतरन्तु त्रिपर्वाणस्तापा अनुप्लवन्त इति सम्बन्धः। आधिदैविकाधिभौतिकयोस्तापयोर्बाह्यत्वेनैकत्वं विवक्षितं, चित्ते वृत्तिरस्या इत्यविद्या चित्तवृत्तिः, तया हातव्ये एव बुद्धीन्द्रियशरीरादौ दारापत्यादौ चाहङ्कार-ममकारानुपातिनमिति। तदत्र न सम्यग्दर्शनादन्यत् परित्राणमस्तीत्याह—तदेवम् इति। तदेवमौपाधिकं विषयसुखस्य परिणामतः संस्कारतस्तापसंयोगाच्च दुःखत्वमभिधाय स्वाभाविकमादर्शयति—गुणवृत्तिविरोधाच्च इति। व्याचष्टे, प्रख्या इति।— प्रख्याप्रवृत्ति-

घोरं मूढं वा प्रत्ययं त्रिगुणमेवारभन्ते, चलञ्च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम्। रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्ते, सामान्यानि त्वतिशयैः सह प्रवर्त्तन्ते, एवमेते गुणा इतरेतराश्रयेणोपार्ज्जितसुखदुःखमोहप्रत्यया इति सर्वे सर्व्वरूपा भवन्ति, गुणप्रधानभावकृतस्त्वेषां विशेष इति, तस्मात् दुःखमेव सर्वं विवेकिन इति। तदस्य महतो दुःखसमुदायस्य प्रभवबीजमविद्या, तस्याश्च सम्यग्दर्शनमभाव-हेतुः, यथा चिकित्साशास्त्रं चतुर्व्यूहं—रोगः, रोगहेतुः, आरोग्यं, भैषज्यम् इति, एवमिदमपि शास्त्रं चतुर्व्यूहमेव, तद्यथा—संसारः, संसारहेतुः, मोक्षः, मोक्षोपायः इति।

---

स्थितिरूपा बुद्धिरूपेण परिणता गुणाः सत्त्वरजस्तमांसि परस्परानुग्रहतन्त्राः शान्तं सुखात्मकं, घोरं दुःखात्मकं, मूढं विषादात्मकमेव प्रत्ययं सुखोपभोगरूपमपि त्रिगुण-मारभन्ते। न च सोऽपि तादृशप्रत्ययरूपोऽस्य परिणामः स्थिर इत्याह —चलञ्च गुणवृत्तमिति क्षिप्रपरिणामि चित्तमुक्तम् इति। नन्वेकः प्रत्ययः कथं परस्परविरुद्धशान्तघोरमूढ-त्वान्येकदा प्रतिपद्यते? इत्यत आह, रूपातिशया वृत्त्यतिशयाश्च परस्परेण विरुध्यन्त इति।—रूपाणि अष्टौ भावा धर्मादयः, वृत्तयः सुखाद्याः, तदिह धर्मेण विपच्यमानेना-धर्मस्तादृशो विरुध्यते, एवं ज्ञानवैराग्यैश्वर्य्यैः सुखादिभिश्च तादृशान्येव तद्विपरीतानि विरुध्यन्ते, सामान्यानि तु असमुदाचरद्रूपाणि अतिशयैः समुदाचरद्भिः सहाविरोधात् प्रवर्त्तन्त इति। ननु गृह्णीम एतत्, तथाऽपि विषयसुखस्य कुतः स्वाभाविकी दुःखता? इत्याह, एवमेत इति।—उपादानाभेदादुपादानात्मकत्वाच्चोपादेयस्याप्यभेद इत्यर्थः। तत् किमिदानीमात्यन्तिकमेव तादात्म्यम्? तथा च बुद्धिव्यपदेशभेदौ न कल्पेते इत्यत आह, गुणप्रधान इति।—सामान्यात्मना गुणभावोऽतिशयात्मना च प्राधान्यं, तस्मा-दुपाधितः स्वभावतश्च दुःखमेव सर्वं विवेकिन इति दुःखं हेयं प्रज्ञावतां, न च तन्निदान-हानमन्तरेण तद्धेयं भवितुमर्हति, न चापरिज्ञातं निदानं शक्यं हातुमिति मूलनिदानमस्य दर्शयति तदस्य इति।—दुःखसमुदायस्य प्रभवः उत्पत्तिर्यतस्तद्बीजमित्यर्थः। तदुच्छेद-हेतुं दर्शयति—तस्याश्च इति। इदानीमस्य शास्त्रस्य सर्वानुग्रहाय प्रवृत्तस्य तद्विशेनैव शास्त्रेण सादृश्यं दर्शयति, यथा इति।—चत्वारो व्यूहाः संक्षिप्ताः अवयवरचना यस्य

तत्र दुःखबहुलः संसारो हेयः, प्रधानपुरुषयोः संयोगो हेयहेतुः, संयोगस्य आत्यन्तिकी निवृत्तिर्हानं, हानोपायः सम्यग्दर्शनं, तत्र हातुः स्वरूपमुपादेयं हेयं वा न भवितुमर्हति इति, हाने तस्योच्छेदवादप्रसङ्गः, उपादाने च हेतुवादः, उभयप्रत्याख्याने च शाश्वतवाद इत्येतत् सम्यग्दर्शनम् ॥ १५ ॥

तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते ।

**हेयं दुःखमनागतम् ॥ १६ ॥**

दुःखमतीतमुपसम्भोगेनातिवाहितं न हेयपक्षे वर्त्तते, वर्त्तमानञ्च स्वक्षणे भोगारूढमिति न तत् क्षणान्तरे हेयता-

---

तत्तथोक्तम् । ननु दुःखं हेयमुक्त्वा संसारं हेयमभिदधतः कुतो न विरोधः ? इत्यत आह—तत्र दुःखबहुल इति । यत् कृत्वा अविद्या संसारं करोति तदस्या अवान्तरव्यापारं संसारहेतुमाह—प्रधानपुरुषयोः इति । मोक्षस्वरूपमाह—संयोगस्य इति । मोक्षोपायमाह—हानोपाय इति । केचित् पश्यन्ति हातुः स्वरूपोच्छेद एव मोक्षः,तथाऽऽहुः,—"प्रदीपस्येव निर्वाणं विमोक्षस्तस्य चेतसः" इति । अन्ये तु सवासनक्लेशसमुच्छेदाद्विशुद्धविज्ञानोत्पाद एव मोक्ष इत्याचक्षते, तान् प्रत्याह—तत्र इति । तत्र हानं तावत् दूषयति, हाने तस्य इति ।—न हि कश्चित् प्रेक्षावानात्मोच्छेदाय यतते । ननु दृश्यन्ते तीव्रगदोन्मूलितसकलसुखा दुःखमयीमिव मूर्त्तिमुद्वहन्तः स्वोच्छेदाय यतमानाः ? सत्यं, केचिदेव ते, न त्वेवं संसारिणो विविधविचित्रदेवाद्यानन्दभोगभागिनः, तेऽपि च मोक्षमाणा दृश्यन्ते, तस्मादपुरुषार्थप्रसक्तेर्न हातुः स्वरूपोच्छेदो मोक्षोऽभ्युपेयः । अस्तु तर्हि हातुः स्वरूपमुपादेयमित्यत आह, उपादाने च हेतुवाद इति ।—उपादाने हि कार्य्यत्वेनानित्यत्वे सति मोक्षत्वादेव च्यवेत, अमृतत्वं हि मोक्षः, नापि विशुद्धो विज्ञानसन्तानो भवति अमृतः, सन्तानिभ्यो व्यतिरिक्तस्य सन्तानस्य वस्तुसतोऽभावात्, सन्तानिनां चानित्यत्वात्, तस्मात् तथा यतितव्यं यथा शाश्वतवादो भवति, तथा च पुरुषार्थत्वमपवर्गस्येत्याह—उभयप्रत्याख्याने इति । तस्मात् स्वरूपावस्थानमेवात्मनो मोक्ष इत्येतदेव सम्यग् दर्शनम् ॥ १५ ॥

तदेतच्छास्त्रं चतुर्व्यूहमित्यभिधीयते, हेयं दुःखमनागतमिति सूत्रम् ।—अनागतमिति अतीतवर्त्तमाने व्यवच्छिनत्ति ।

मापद्यते, तस्मात् यदेवानागतं दुःखं तदेवाक्षिपात्रकल्पं योगिनं क्लिश्नाति नेतरं प्रतिपत्तारं, तदेव हेयतामापद्यते ॥ १६ ॥

तस्मात् यदेव हेयमित्युच्यते तस्यैव कारणं प्रतिनिर्दिश्यते।

**द्रष्टृ-दृश्ययोः संयोगो हेयहेतुः ॥ १७ ॥**

द्रष्टा बुद्धेः प्रतिसंवेदी पुरुषः, दृश्याः बुद्धिसत्त्वोपारूढाः सर्व्वे धर्म्माः, तदेतत् दृश्यमयस्कान्तमणिकल्पं सन्निधिमात्रोपकारि दृश्यत्वेन भवति पुरुषस्य स्वं दृशिरूपस्य स्वामिनः, अनुभवकर्मविषयतामापन्नमन्यस्वरूपेण प्रतिलब्धात्मकं स्वतन्त्रमपि

---

तत्रोपपत्तिमाह—दुःखमतीतम् इति। ननु वर्त्तमानमुपभुज्यमानं न भोगेनातिवाहितमिति कस्मान्न हेयम्? इत्यत आह, वर्त्तमानञ्च इति।—सुगमम् ॥ १६ ॥

हेयमुक्तं, तस्य निदानमुच्यते—द्रष्टृदृश्ययोः संयोगो हेयहेतुरिति सूत्रम्।

द्रष्टृस्वरूपमाह, द्रष्टा बुद्धेः प्रतिसंवेदी इति।—चितिच्छायाऽऽपत्तिरेव बुद्धेः बुद्धिप्रतिसंवेदित्वमुदासीनस्यापि पुंसः। ननु एतावताऽपि बुद्धिरेवानेन दृश्येत, न दृश्येरन् शब्दादयोऽत्यन्तव्यवहिताः? इत्यत आह, दृश्या बुद्धिसत्त्व इति।—इन्द्रियप्रणालिकया बुद्धौ शब्दाद्याकारेण परिणतायां दृश्यायां भवन्ति शब्दादयोऽपि धर्म्मा दृश्या इत्यर्थः। ननु तदाकारापत्त्या बुद्धिः शब्दाद्याकारा भवतु, पुंसस्तु बुद्धिसम्बन्धेऽभ्युपगम्यमाने परिणामित्वम्, असम्बन्धे वा कथं तेषां बुद्धिसत्त्वोपारूढानामपि शब्दादीनां दृश्यत्वं, न हि द्रष्ट्रिनाऽसंसृष्टं दृश्यं दृष्टम्? इत्यत आह, तदेतत् दृश्यम् इति।—प्रपञ्चितमिदमस्माभिः प्रथमपाद एव यथा चित्यासम्पृक्तमपि बुद्धिसत्त्वमत्यन्तस्वच्छतया चितिबिम्बोद्ग्राहितया समापन्नचैतन्यमिव शब्दाद्यनुभवतीति, अत एव च शब्दाद्याकारपरिणतबुद्धिसत्त्वोपनीतान् सुखादीन् भुञ्जानः स्वामी भवति द्रष्टा, तादृशं चास्य बुद्धिसत्त्वं स्वं भवति, तदेतत् बुद्धिसत्त्वं शब्दाद्याकारवत् दृश्यमयस्कान्तमणिकल्पं पुरुषस्य स्वं भवति दृशिरूपस्य स्वामिनः, कस्मात् अनुभवः? इति। अनुभवकर्मविषयतामापन्नं यतः, अनुभवो भोगः पुरुषस्य. कर्म्म क्रिया, तद्विषयतां भुज्यमानताम् आपन्नं यस्मादतः स्वं भवति इत्यर्थः। ननु स्वयं-प्रकाशं बुद्धिसत्त्वं कथमनुभवविषयः? इत्यत आह, अन्यस्वरूपेण इति।—यदि हि चैतन्यरूपं वस्तुतो बुद्धिसत्त्वं स्यात् भवेत् स्वयंप्रकाशं, किन्तु स्वं चैतन्यादन्यज्जड़रूपं तेन प्रतिलब्धात्मकं, तस्मात्तदनुभवविषयः। ननु यस्य हि यत्र किञ्चिदायतते तत् तदधीनं,

परार्थत्वात् परतन्त्रं, तयोर्दृग्दर्शनशक्त्योरनादिरर्थकृतः संयोगो हेयहेतुः दुःखस्य कारणमित्यर्थः। तथा चोक्तं—तत्संयोग-हेतुविवर्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः। कस्मात्? दुःखहेतोः परिहार्य्यस्य प्रतीकारदर्शनात्, तद्यथा—पाद-तलस्य भेद्यता, कण्टकस्य भेत्तृत्वं, परिहारः कण्टकस्य पादानधिष्ठानं, पादत्राणव्यवहितेन वाऽधिष्ठानम्, एतत् त्रयं यो वेद लोके स तत्र प्रतीकारमारभमाणो भेदजं दुःखं

---

न च बुद्धिसत्त्वस्य पुरुषमुदासीनं प्रति किञ्चिदायतत इति कथञ्च तत्तन्त्रम्? तथा च न तस्य कर्मेत्यत आह, स्वतन्त्रमपि इति।—परार्थत्वात् पुरुषार्थत्वात्, परतन्त्रं पुरुषतन्त्रम्। नन्वयं दृग्दर्शनशक्त्योः सम्बन्धः स्वाभाविको वा स्यात् नैमित्तिको वा? स्वाभाविकत्वे सम्बन्धिनोर्नित्यत्वादशक्योच्छेदः सम्बन्धः, तथा च संसारनित्यत्वं, नैमित्तिकत्वे तु क्लेशकर्म-तद्वासनानामन्तःकरणवृत्तितया सत्यन्तःकरणे भावादन्तःकरणस्य च तन्निमित्तत्वे परस्पराश्रयप्रसङ्गादनादित्वस्य च सर्गादावसम्भवाद-नुत्पाद एव संसारस्य स्यात्? यथोक्तं "पुमानकर्त्ता येषान्तु तेषामपि गुणैः क्रिया। कथमादौ भवेत्तत्र कर्म तावन्न विद्यते॥ मिथ्याज्ञानं न तत्रास्ति रागद्वेषादयोऽपि वा। मनोवृत्तिर्हि सर्वेषां न चोत्पन्नं मनस्तदा॥" इति शङ्कामपनयति, तयोर्दृग्दर्शनशक्त्यो-रनादिरर्थकृतः संयोगो हेयहेतुः इति।—सत्यं न स्वाभाविकः सम्बन्धः, नैमित्तकस्तु, न चैवमादिमान्, अनादिनिमित्तप्रभवतया तस्याप्यनादित्वात्, क्लेशकर्म-तद्वासनासन्तान-श्चायमनादिः, प्रतिसर्गावस्थायाञ्च सहान्तःकरणेन प्रधानसाम्यमुपगतोऽपि सर्गादौ पुन-स्तादृगेव भवति, वर्षापाय इवोद्भिज्जभेदो मृद्भावमुपगतोऽपि पुनर्वर्षासु पूर्वरूप इत्यस-कृदावेदितं प्राग्भावितया संयोगस्याविद्या कारणं. स्थितिहेतुतया पुरुषार्थः कारणं, तद्दर्शन तस्य स्थितेः, तदिदमुक्तम् अर्थकृत इति। तथा चोक्तम् इति पञ्चशिखेन।—तत्संयोगः बुद्धिसंयोगः, स एव हेतुर्दुःखस्य तस्य विवर्ज्जनात् स्यादयमात्यन्तिको दुःखप्रतीकारः, अर्थात् तदवर्ज्जने दुःखमित्युक्तं भवति। तत्रैवात्यन्तप्रसिद्धं निदर्शन-माह, तद्यथा इति।—पादत्राणम् उपानत्। स्यादेतत्, गुणसंयोगस्तापहेतुरित्युच्य-माने गुणानां तापकत्वमभ्युपेयं, न च तप्तिक्रियाया अस्यादेरिव कर्तृस्थो भावो येन तप्यमन्यन्नापेक्षेत, न चास्यास्तप्यतया पुरुषः कर्म, तस्यापरिणामितया क्रियाजनित-फलशालित्वायोगात्, तस्मात् तपेस्तप्यव्याप्तस्य तन्निवृत्तौ निवृत्तिमवगच्छामः, ज्वलन-

नाप्नोति। कस्मात्? चित्तोपलब्धिसामर्थ्यादिति, अत्रापि तापकस्य रजसः सत्त्वमेव तप्यं, कस्मात्? तपिक्रियायाः कर्म्मस्थत्वात्, सत्त्वे कर्म्मणि तपिक्रिया नापरिणामिनि निष्क्रिये चेतज्ञे, दर्शितविषयत्वात् सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽनुतप्यत इति दृश्यते॥ १७॥

दृश्यस्वरूपमुच्यते—

**प्रकाशक्रियास्थितिशीलं भूतेन्द्रियात्मकं भोगापवर्गार्थं दृश्यम्॥ १८॥**

प्रकाशशीलं सत्त्वं, क्रियाशीलं रजः, स्थितिशीलं तम इति, एते गुणाः परस्परोपरक्तप्रविभागाः परिणामिनः संयोगविभागधर्माण इतरेतरोपाश्रयेण उपार्जितमूर्त्तयः परस्पराङ्गाङ्गित्वेऽप्यसम्भिन्नशक्तिप्रविभागाः तुल्यजातीयातुल्यजातीयशक्तिभेदा-

---

विरहेणैव धूमाभावमित्यत आह, अत्रापि तापकस्य इति।—गुणानामेव तप्यतापकभावः, तत्र मृदुत्वात् पादतलवत् सत्त्वं तप्यं, रजस्तु तीव्रतया तापकमिति भावः। पृच्छति, कस्मात् इति।—कस्मात् सत्त्वमेव तप्यं न तु पुरुष इत्यर्थः। उत्तरं—तपिक्रियाया इति। तत् किमिदानीं पुरुषो न तप्यते, तथा च अचेतनस्यास्तु सत्त्वस्य तापः किन्नश्छिन्नम्? इत्यत आह, दर्शितविषयत्वात् सत्त्वे तु तप्यमाने तदाकारानुरोधी पुरुषोऽप्यनुतप्यत इति।—दर्शितविषयत्वमनुतापहेतुः, तच्च प्राग् व्याख्यातम्॥ १७॥

दृश्यं व्याचष्टे—प्रकाशेत्यादि दृश्यमित्यन्तेन सूत्रेण।

सत्त्वस्य हि भागः प्रकाशस्तामसेन भागेन दैन्येन वा राजसेन वा दुःखेनानुरज्यते, एवं राजसादिष्वपि द्रष्टव्यं, तदिदमुक्तं, परस्परोपरक्तप्रविभागा इति।—पुरुषेण सह संयोगविभागधर्माणः, यथाऽऽम्नायते—"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः॥" इति। इतरेतरोपाश्रयेणोपार्ज्जिता मूर्त्तिः पृथिव्यादिरूपा यैस्ते तथोक्ताः। स्यादेतत्, सत्त्वेन शान्तप्रत्यये जनयितव्ये रजस्तमसोरपि सत्त्वाङ्गत्वेन तत्र हेतुभावादस्ति सामर्थ्यमिति, यदाऽपि च रजस्तमसोरङ्गित्वं तदाऽपि शान्त एव प्रत्यय उदीयेत न घोरो नापि मूढो वा सत्त्वप्राधान्य इवेत्यत आह, परस्पराङ्गाङ्गित्वेऽप्यसम्भिन्न-

नुपातिनः प्रधानवेलायामुपदर्शितसन्निधाना गुणत्वेऽपि च व्यापारमात्रेण प्रधानान्तर्नीतानुमितास्तिताः पुरुषार्थकर्त्तव्यतया प्रयुक्तसामर्थ्याः सन्निधिमात्रोपकारिणः अयस्कान्तमणिकल्पाः प्रत्ययमन्तरेणैकतमस्य वृत्तिमनुवर्त्तमानाः प्रधानशब्द-

शक्तिप्रविभागा इति। —भवतु शान्ते प्रत्यये जनयितव्ये रजस्तमसोरङ्गभावः, तथाऽपि नैषां शक्तयः सङ्कीर्य्यन्ते, कार्य्यासङ्करोन्नेयो हि शक्तीनामसङ्करः, असङ्कीर्णेन च समुदाचरता रूपेण शान्तघोरमूढरूपाणि कार्य्याणि दृश्यन्त इति सिद्धं शक्तीनामसम्भेद इति। स्यादेतत्, असम्भेदश्चेत् शक्तीनां न सम्भूयकारित्वं गुणानां, न जातु भिन्नशक्तीनां सम्भूय कार्य्यकारित्वं दृष्टं, न हि तन्तुमृत्पिण्डवीरणादीनि घटादीन् सम्भूय कुर्वत इत्यत आह, तुल्यजातीयातुल्यजातीयशक्तिभेदानुपातिन इति। —यद्यपि तुल्यजातीय उपादानशक्तिर्नान्यत्र, सहकारिशक्तिस्त्वतुल्यजातीये, घटे तु जनयितव्ये न वीरणानामस्ति सहकारिशक्तिरपीति न तेषां तन्तूनां सम्भूयकारितेति भावः। तुल्यजातीयातुल्यजातीयेषु शक्येषु ये शक्तिभेदास्ताननुपतितुं शीलं येषां ते तथोक्ताः, प्रधानवेलायाम् इति दिव्यशरीरे जनयितव्ये सत्त्वं गुणः प्रधानम्, अङ्गे रजस्तमसी, एवं मनुष्यशरीरे जनयितव्ये रजः प्रधानम्, अङ्गे सत्त्व-तमसी, एवं तिर्य्यक्शरीरे जनयितव्ये तमः प्रधानम्, अङ्गे सत्त्व-रजसी,तेनैते गुणाः प्रधानत्ववेलायामुपदर्शितसन्निधानाः कार्य्योपजननं प्रत्युद्भूतवृत्तय इत्यर्थः। प्रधानशब्दश्च भावप्रधानः, यथा द्व्येकयोर्द्विवचनैकवचन इत्यत्र द्वित्वैकत्वयोरिति, अन्यथा द्व्येकेष्विति स्यात्। ननु तदा प्रधानमुद्भूततया शक्यमस्तीति वक्तुम्, अनुद्भूतानान्तु तदङ्गानां सद्भावे किं प्रमाणम्? इत्यत आह, गुणत्वेऽपि च इति। —यद्यपि नोद्भूतास्तथाऽपि गुणानामविवेकित्वात् सम्भूयकारित्वाच्च व्यापारमात्रेण सहकारितया प्रधानेऽन्तर्नीतं सत् अनुमितमस्तित्वं येषां ते तथोक्ताः। ननु सन्तु गुणाः सम्भूयकारिणः समर्थाः, कस्मात् तत् पुनः कुर्वन्ति? न हि समर्थमित्येव कार्य्यं जनयति, मा भूदस्य कार्य्योपजननं प्रति विराम इत्यत आह, पुरुषार्थकर्त्तव्यतया इति। —ततो निर्वर्त्तितनिखिलपुरुषार्थानां गुणानामुपरमः कार्य्यानारम्भणमित्युक्तं भवति। ननु पुरुषस्यानुपकुर्वतः कथं पुरुषार्थेन प्रयुज्यते? इत्यत आह— सन्निधिमात्रोपकारिण इति। ननु धर्माधर्मलक्षणमेव निमित्तं प्रयोजकं गुणानां, किमुच्यते पुरुषार्थप्रयुक्ताः? इत्यत आह, प्रत्ययमन्तरेण इति। —एकतमस्य सत्त्वस्य रजस्तमसो वा प्रधानस्य स्वकार्य्ये प्रवृत्तस्य, वृत्तिम् इतरे प्रत्ययं निमित्तं धर्मादिकं

वाच्या भवन्ति, एतत् दृश्यमित्युच्यते। तदेतत् दृश्यं भूतेन्द्रियात्मकं भूतभावेन पृथिव्यादिना सूक्ष्मस्थूलेन परिणमते, तथेन्द्रियभावेन श्रोत्रादिना सूक्ष्मस्थूलेन परिणमत इति। तत्तु नाप्रयोजनम्, अपि तु प्रयोजनमुररीकृत्य प्रवर्त्तत इति भोगापवर्गार्थं हि तत् दृश्य पुरुषस्येति। तत्रेष्टानिष्टगुणस्वरूपावधारणम् अविभागापन्नं भोगः, भोक्तुः स्वरूपावधारणमपवर्ग इति, द्वयोरतिरिक्तमन्यत् दर्शनं नास्ति. तथा चोक्तं— "अयन्तु खलु त्रिषु गुणेषु कर्त्तृषु अकर्त्तरि च पुरुषे तुल्यातुल्यजातीये चतुर्थे तत् क्रियासाक्षिण्युपनीयमानान् सर्वभावानुपपन्नाननुपश्यन्न दर्शनमन्यच्छङ्कते" इति। तावेतौ भोगापवर्गौ बुद्धिकृतौ बुद्धावेव वर्त्तमानौ कथं पुरुषे व्यपदिश्येते? इति. यथा विजयः पराजयो वा योद्धृषु वर्त्तमानः स्वामिनि व्यपदिश्यते, स हि तस्य फलस्य भोक्तेति, एवं बन्धमोक्षौ बुद्धावेव वर्त्तमानौ पुरुषे व्यपदिश्येते, स हि तत्फलस्य भोक्तेति बुद्धेरेव पुरुषार्थापरिसमाप्तिर्बन्धः. तदर्थावसायो मोक्ष इति।

---

विनैवानुवर्त्तमानाः, यथा च वक्ष्यति "निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्" इति। एते गुणाः प्रधानशब्दवाच्या भवन्तीति सम्बन्धः, प्रधीयते विधीयते वि[illegible] कार्य्यमेभिरिति व्युत्पत्त्या एतत् दृश्यमुच्यते। तदेवं गुणानां शीलमभिधाय तस्य कार्य्यमाह, तदेतत् इति।—सत्कार्य्यवादसिद्धौ यत् यदात्मकं तत् तेन रूपेण परिणमत इति। भूतेन्द्रियात्मकत्वं दीपयति—भूतभावेन इत्यादिना। भोगापवर्गार्थम् इति सूत्रावयवमवतारयति—तत्तु नाप्रयोजनम् इति। भोगं विवृणोति—तत्र इति। सुखदुःखे हि त्रिगुणाया बुद्धेः स्वरूपे, तस्यास्तथात्वेन परिणामात्, तथाऽपि गुणगततयाऽवधारणेन भोग इत्यत आह, अविभागापन्नम् इति।—एतच्चासकृदावेदितम्। अपवर्गं विवृणोति, भोक्तुः इति।—अपवृज्यते अनेनेत्यपवर्गः। प्रयोजनान्तरस्याभावमाह—द्वयोः इति। तथा चोक्तं पञ्चशिखेन—अयन्तु खलु इति। ननु वस्तुतो भोगापवर्गौ बुद्धिकृतौ बुद्धिवर्त्तिनौ च, कथं तदकारणे तदनधिकरणे च पुरुषे व्यपदिश्येते? इत्यत आह. तावेतौ इति।— भोक्तृत्वञ्च पुरुषस्योपपादितम् अग्रे च वक्ष्यते। परमार्थतस्तु बुद्धेरेव पुरुषार्थापरि-

एतेन ग्रहणधारणोहापोहतत्त्वज्ञानाभिनिवेशा बुद्धौ वर्त्तमानाः पुरुषेऽध्यारोपितसद्भावाः, स हि तत्फलस्य भोक्तेति ॥ १८ ॥

दृश्यानान्तु गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते—

विशेषाविशेषलिङ्गमात्रालिङ्गानि गुणपर्वाणि ॥ १९ ॥

तत्राकाशवायूग्न्युदकभूमयो भूतानि शब्दस्पर्शरूपरसगन्धतन्मात्राणामविशेषाणां विशेषाः। तथा श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणानि बुद्धीन्द्रियाणि, वाक्पाणिपादपायूपस्थानि कर्मेन्द्रियाणि, एकादशं मनः सर्वार्थम्, इत्येतान्यस्मितालक्षणस्याविशेषस्य विशेषाः। गुणानामेष षोड़शको विशेषपरिणामः, षट् अविशेषाः, तद्यथा शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रञ्च, इत्येकद्वित्रिचतुष्पञ्च-

---

समाप्तिबन्ध इति। एतेन भोगापवर्गयोः पुरुषसम्बन्धित्वकथनमार्गेण, ग्रहणादयोऽपि पुरुषसम्बन्धिनो वेदितव्याः। तत्र स्वरूपमात्रेणार्थज्ञानं ग्रहणं, तत्र स्मृतिः धारणं, तद्गतानां विशेषाणामूहनमूहः, समारोपितानाञ्च युक्त्याऽपनयोऽपोहः, ताभ्यामेवोहापोहाभ्यां तदवधारणं तत्त्वज्ञानं, तत्त्वावधारणपूर्वं हानोपादानम् अभिनिवेशः ॥ १८ ॥

दृश्यानां गुणानां स्वरूपभेदावधारणार्थमिदमारभ्यते—विशेषेत्यादि पर्वाणीत्यन्तं सूत्रम्।

येषाम् अविशेषाणां शान्तघोरमूढ़लक्षणरहितानां ये विशेषा विकारा एव न तु तत्त्वान्तरप्रकृतयस्तेषां तानाह, तत्राकाश इति।—उत्पादक्रमानुरूप एवोपन्यासक्रम, अस्मितालक्षणस्याविशेषस्य सत्त्वप्रधानस्य बुद्धीन्द्रियाणि विशेषाः, रजःप्रधानस्य तु कर्मेन्द्रियाणि, मनस्तूभयात्मकमुभयप्रधानस्येति मन्तव्यम्। अत्र च पञ्च तन्मात्राणि बुद्धिकारणकान्यविशेषत्वात् अस्मितावत् इति. विकारहेतुत्वं चाविशेषत्वं तन्मात्रेषु चास्मितायाञ्चाविशिष्टम्। सङ्कलय्य विशेषान् परिगणयति—गुणानामेष इति। अविशेषानपि गणयति—षट् इति। सङ्कलय्योदाहरति, तद्यथा इति।—विशिष्टं ह्यपरं परेभ्येति गन्ध आत्मना पञ्चलक्षणः, रसः आत्मना चतुर्लक्षणः,

लक्षणाः शब्दादयः पञ्च अविशेषाः, षष्ठश्चाविशेषोऽस्मितामात्र इति, एते सत्तामात्रस्यात्मनो महतः षड़विशेषपरिणामाः, यत् तत्परमविशेषेभ्यो लिङ्गमात्रं महत्तत्त्वं तस्मिन्नेते सत्तामात्रे महत्यात्मन्यवस्थाय विवृद्धिकाष्ठामनुभवन्ति, प्रतिसंसृज्यमानाश्च तस्मिन्नेव सत्तामात्रे महति आत्मनि अवस्थाय यत्तन्निःसत्तासत्तं निःसदसत् निरसत् अव्यक्तमलिङ्गं प्रधानं

रूपमात्मना विलक्षणं, स्पर्श आत्मना हिलक्षणः, शब्दः शब्दलक्षण एवेति। कस्य पुनरमी षड़विशेषाः कार्य्यम्? इत्यत आह, एते सत्तामात्रस्यात्मन इति।—पुरुषार्थक्रियाक्षमं सत्, तस्य भावः सत्ता, तन्मात्रं, महत्तत्त्वं, यावती काचित् पुरुषार्थक्रिया शब्दादिभोगलक्षणा सत्त्वपुरुषान्यताख्यातिलक्षणा वा अस्ति, सा सर्वा महति बुद्धौ समाप्यत इत्यर्थः। आत्मन इति स्वरूपोपदर्शनेन तुच्छत्वं निषेधति। प्रकृतेरयमाद्यः परिणामः वास्तवो न तु तद्विवर्त्त इति यावत्। यत् तत्परं विप्रकृष्टकालम् अविशेषेभ्यस्तदपेक्षया सन्निकृष्टकालेभ्यः लिङ्गमात्रं महत्तत्त्वं, तस्मिन् एते षड़विशेषाः सत्तामात्रे महत्यात्मन्यवस्थाय सत्कार्य्यसिद्धेर्विवृद्धिकाष्ठाम् अनुभवन्ति प्राप्नुवन्ति, ये पुनरविशेषाणां विशेषपरिणामास्तेषाञ्च धर्मलक्षणावस्थाः परिणामा इति सेयमेषां विवृद्धिकाष्ठा परिणामकाष्ठेति। तदेवमुत्पत्तिक्रममभिधाय प्रलयक्रममाह, प्रतिसंसृज्यमाना इति।—प्रतिसंसृज्यमानाः प्रलीयमानाः, स्वात्मनि लीनविशेषा अविशेषास्तस्मिन्नेव सत्तामात्रे महत्यात्मन्यवस्थाय निलीय सहैव महता तेऽविशेषा अव्यक्तम्, अन्यत्र लयं न गच्छतीत्यलिङ्गं प्रतियन्ति, तस्यैव विशेषणं निःसत्तासत्तम् इति, सत्ता पुरुषार्थक्रियाक्षमत्वं, असत्ता तुच्छता, निष्क्रान्तं सत्ताया असत्तायाश्च यत्तथोक्तम्। एतदुक्तं भवति—सत्त्वरजस्तमसां साम्यावस्था न क्वचित् पुरुषार्थ उपयुज्यत इति न सती, नापि गगनकमलिनीवत् तुच्छस्वभावा तेन नासत्यपीति। स्यादेतत्, अव्यक्तावस्थायामप्यस्ति महदादि तदात्मना, न हि सतो विनाशः, विनाशे वा न पुनरुत्पादः, न ह्यसत उत्पाद इति महदादिसद्भावात् पुरुषार्थक्रिया प्रवर्त्तेत, तत् कथं निःसत्त्वमव्यक्तम्? इत्यत आह, निःसदसत् इति।—निष्क्रान्तं कारणं सतः कार्य्यात्, यद्यपि कारणावस्थायां सदेव शक्त्यात्मना कार्य्यं, तथाऽपि स्वोचितामर्थक्रियामकुर्वदसदित्युक्तम्। न चैतत् कारणं शशविषाणायमानकार्य्यमित्याह, निरसत् इति।—निष्क्रान्तम् असतस्तुच्छरूपात् कार्य्यात्, तथा हि सति व्योमारविन्द-

तत् प्रतियन्तीति, एष तेषां लिङ्गमात्रः परिणामः, निःसत्तासत्तञ्चालिङ्गपरिणाम इति, अलिङ्गावस्थायां न पुरुषार्थो हेतुः, नालिङ्गावस्थायामादौ पुरुषार्थता कारणं भवतीति न तस्याः पुरुषार्थता कारणं भवतीति, नासौ पुरुषार्थकृतेति नित्या आख्यायते, त्रयाणान्त्ववस्थाविशेषाणामादौ पुरुषार्थता कारणं भवति, स चार्थो हेतुर्निमित्तं कारणं भवतीत्यनित्या आख्यायते, गुणास्तु सर्वधर्मानुपातिनो न प्रत्यस्तमयन्ते नोपजायन्ते व्यक्तिभिरेवातीतानागतव्ययागमवतीभिर्गुणान्वयिनीभिरुपजनापायधर्मका इव प्रत्यवभासन्ते, यथा देवदत्तो दरिद्राति, कस्मात्? यतोऽस्य म्रियन्ते गाव इति, गवामेव मरणात्तस्य दरिद्राणं न स्वरूपहानादिति समः समाधिः। लिङ्गमात्रम् अलिङ्गस्य प्रत्यासन्नं तत्र तत्संसृष्टं विविच्यते

---

भिन्नात्मान्न कार्य्यमुत्पद्येतेति भावः। प्रतिसर्गमुक्तमुपसंहरति, एष तेषाम् इति।—एष इत्यनन्तरोक्तात् पूर्वस्य परामर्शः। लिङ्गमात्राद्यवस्था पुरुषार्थकृतत्वादनित्या, अलिङ्गावस्था तु पुरुषार्थेनाकृतत्वान्नित्येयत्र हेतुमाह—अलिङ्गावस्थायाम् इति। कस्मात् पुनर्न पुरुषार्थो हेतुः? इत्यत आह,नालिङ्गावस्थायाम् इति।—भवतिना विषयेण विषयि ज्ञानमुपलक्षयति। एतदुक्तं भवति—एवं हि पुरुषार्थताकारणमलिङ्गावस्थायां ज्ञायेत यद्यलिङ्गावस्था शब्दाद्युपभोगं वा सत्त्वपुरुषान्यताख्यातिं वा पुरुषार्थं निर्वर्त्तयेत्. तन्निर्वर्त्तने हि न साम्यावस्था स्यात्, तस्मात् पुरुषार्थकारणत्वमस्या न ज्ञायत इति नास्याः पुरुषार्थताहेतुः। उपसंहरति, नासौ इति।—इति तस्मादर्थे। अनित्यावस्थामाह, त्रयाणाम् इति।—त्रयाणां लिङ्गमात्राविशेषविशेषाणामित्यर्थः। पर्वस्वरूपं दर्शयित्वा गुणस्वरूपमाह—गुणास्तु इति। निदर्शनमाह, यथा देवदत्त इति।—यथात्यन्तभिन्नानां गवामुपचयापचयौ देवदत्तोपचयापचयहेतुस्तत्र कैव कथा गुणेभ्यो भिन्नाभिन्नानां व्यक्तीनामुपजनापाययोरित्यर्थः। ननु सर्गक्रमः किमनियतः? नेत्याह, लिङ्गमात्रम् इति।—न खलु न्यग्रोधधाना अङ्कुरायैव न्यग्रोधशाखिनं सान्द्रं शाद्वलदलजटिलं शाखाकाण्डनिपीतमार्त्तण्डचण्डातपमण्डलमारभन्ते, किन्तु क्षितिसलिलतेजःसम्पर्कात् परस्परोपजायमानाङ्कुरपत्रकाण्डनालादिक्रमेण, एवमिहापि युक्त्यागमसिद्धः

क्रमानतिवृत्तेः, तथा षड़विशेषा लिङ्गमात्रे संसृष्टा विविच्यन्ते, परिणामक्रमनियमात् तथा तेष्वविशेषेषु भूतेन्द्रियाणि संसृष्टानि विविच्यन्ते, तथा चोक्तं पुरस्तात्, न विशेषेभ्यः परं तत्त्वान्तरमस्ति इति विशेषाणां नास्ति तत्त्वान्तरपरिणामः । तेषान्तु धर्मलक्षणावस्थापरिणामा व्याख्यायिष्यन्ते ॥ १९ ॥

व्याख्यातं दृश्यम्, अथ द्रष्टुः स्वरूपावधारणार्थमिदमारभ्यते—

**द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः ॥ २० ॥**

दृशिमात्र इति दृक्शक्तिरेव विशेषणापरामृष्टेत्यर्थः, स पुरुषो बुद्धेः प्रतिसंवेदी, स बुद्धेर्न सरूपो नात्यन्तं विरूप इति। न तावत् सरूपः, कस्मात् ? ज्ञाताज्ञातविषयत्वात् परि-

---

क्रमश्चाऽऽस्थेय इति। कथं भूतेन्द्रियाण्यविशेषसंसृष्टानि ? इत्यत आह, तथा चोक्तं पुरस्तात् इति।—इदमेव सूत्रं प्रथमं व्याचक्षाणैः। अथ विशेषाणां कस्मान्न तत्त्वान्तरपरिणाम उक्तः ? इत्यत आह—न विशेषेभ्य इति। तत् किमिदानीमपरिणामिन एव विशेषाः, तथा च नित्याः प्रसज्येरन् ? इत्यत आह—तेषान्तु इति ॥ १९ ॥

व्याख्यातं दृश्यम्, अथ द्रष्टुः स्वरूपावधारणार्थमिदमारभ्यते—द्रष्टा दृशिमात्रः शुद्धोऽपि प्रत्ययानुपश्यः इति सूत्रम् ।

व्याचष्टे, दृशिमात्र इति।—विशेषणानि धर्मास्तैरपरामृष्टा, तदनेन मात्रग्रहणस्य तात्पर्यं दर्शितम्। स्यादेतत्, यदि सर्वविशेषणरहिता दृक्शक्तिः, न तर्हि शब्दादयो दृश्येरन्, न हि दृशिनाऽसंसृष्टं दृश्यं भवति ? इत्यत आह, स पुरुष इति।—बुद्धिदर्पणे पुरुषप्रतिविम्बसङ्क्रान्तिरेव बुद्धिप्रतिसंवेदित्वं पुंसः, तथा च दृशिच्छायाऽऽपन्नया बुद्ध्या संसृष्टाः शब्दादयो भवन्ति दृश्या इत्यर्थः। स्यादेतत्, पारमार्थिकमेव बुद्धि-चैतन्ययोरैक्यं कस्मान्नोपेयते ? किमनया तच्छायाऽऽपत्त्या ? इत्यत आह—स बुद्धेर्न सरूप इति। तथाऽसरूपस्य तच्छायाऽऽपत्तिरपि दुर्घटेत्यत आह—नात्यन्तं विरूप इति। तत्र सारूप्यं निषेधति—न तावत् इति। हेतुं पृच्छति—कस्मात् इति। सहेतुकं वैरूप्ये

णामिनी हि बुद्धिः, तस्याश्च विषयो गवादिर्घटादिर्वा ज्ञातश्चाज्ञातश्चेति परिणामित्वं दर्शयति, सदा ज्ञातविषयत्वन्तु पुरुषस्यापरिणामित्वं परिदीपयति, कस्मात्? न हि बुद्धिश्च नाम पुरुषविषयश्च स्यात् गृहीताऽगृहीता च, इति सिद्धं पुरुषस्य सदा ज्ञातविषयत्वं, ततश्चापरिणामित्वमिति; किञ्च, परार्था बुद्धिः संहत्यकारित्वात्, स्वार्थः पुरुष इति, तथा सर्वार्थाध्यवसायकत्वात् त्रिगुणा बुद्धिः, त्रिगुणत्वात् अचेतनेति, गुणानां तूपद्रष्टा पुरुष इति, अतो न सरूपः। अस्तु तर्हि विरूपः? इति। नात्यन्तं विरूपः, कस्मात्? शुद्धोऽप्यसौ प्रत्ययानुपश्यो यतः, प्रत्ययं बौद्धमनुपश्यति, तमनुपश्यन्न-

हेतुमाह, ज्ञाताज्ञात इति।—परिणामिनी बुद्धिर्यस्मात् तस्मात् विरूपा, यदा खल्वियं शब्दाद्याकारा भवति तदा ज्ञातोऽस्याः शब्दादिलक्षणो भवति विषयः, तदनाकारत्वे तु अज्ञातः, तथा च कदाचिदेव तदाकारतां दधती परिणामिनीति, प्रयोगश्च भवति बुद्धिः परिणामिनी ज्ञाताज्ञातविषयत्वाच्छ्रोत्रादिवदिति। तद्वैधर्म्यं पुरुषस्य तद्विपरीतत्वात् हेतोः सिध्यतीत्याह—सदा ज्ञात इति। स्यादेतत्, सदा ज्ञातविषयश्चेत् पुरुषो न तर्हि केवली स्यात्? इत्याशयवान् पृच्छति—कस्मात्? इति। उत्तरं, न हि बुद्धिश्च नाम इति।—बुद्ध्याग्रहणयोरस्ति सह सम्भवो निरोधावस्थायामत उक्तं विरोधसूचनाय पुरुषविषयश्च इति। तेनाद्यश्चकारो बुद्धिं विषयत्वेन समुच्चिनोति, परिशिष्टौ तु विरोधद्योतकौ चकाराविति। प्रयोगस्तु, पुरुषोऽपरिणामी सदा सम्प्रज्ञातव्युत्थानावस्थयोर्ज्ञातविषयत्वात्, यः परिणामी नासौ सदा ज्ञातविषयी भवति यथा श्रोत्रादिरिति व्यतिरेकी हेतुः। अपरमपि वैधर्म्यमाह, किञ्च परार्था इति।—बुद्धिः खलु क्लेशकर्म्मवासनादिभिर्विषयेन्द्रियादिभिश्च संहत्य पुरुषार्थमभिनिर्वर्त्तयन्ती परार्था। प्रयोगश्च परार्था बुद्धिः संहत्यकारित्वात् शयनासनाभ्यङ्गवदिति। पुरुषस्तु न तथेत्याह, स्वार्थः पुरुष इति।—सर्वं पुरुषाय कल्पते, पुरुषस्तु न कस्मैचिदित्यर्थः। वैधर्म्यान्तरमाह, तथा सर्वार्थ इति।—सर्वान् अर्थान् शान्तघोरमूढांस्तदाकारपरिणता बुद्धिरध्यवस्यति, सत्त्वरजस्तमसां चैते परिणामा इति सिद्धा त्रिगुणा बुद्धिरिति। न चैवं पुरुष इत्याह, गुणानां तूपद्रष्टा पुरुष इति।—तत्प्रतिबिम्बितः पश्यति न तु तदाकारपरिणत इत्यर्थः। उपसंहरति- अत इति।

तदात्माऽपि तदात्मक इव प्रत्ययमनुपश्यति। तथाचोक्तम् अपरिणामिनी हि भोक्तृशक्तिरप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसङ्क्रान्तेव तद्वृत्तिमनुपतति, तस्याश्च प्राप्तचैतन्योपग्रहरूपाया बुद्धिवृत्तेरनुकारमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिरित्याख्यायते॥ २०॥

## तदर्थ एव दृश्यस्यात्मा॥ २१॥

दृशिरूपस्य पुरुषस्य कर्मरूपतामापन्नं दृश्यमिति तदर्थ एव दृश्यस्यात्मा स्वरूपं भवतीत्यर्थः। तत्स्वरूपं तु पररूपेण

---

अस्तु तर्हि विरूप इति? नात्यन्तं विरूपः, कस्मात्? यतः शुद्धोऽपि प्रत्ययानुपश्यः, यथा चेतत् तथोक्तं वृत्तिसारूप्यमितरत्र इत्यत्र। तथाचोक्तं पञ्चशिखेन—अपरिणामिनी हि भोक्तृशक्तिः आत्मा, अत एव बुद्धावप्रतिसङ्क्रमा च, परिणामिनि बुद्धिरूपेऽर्थे प्रतिसङ्क्रान्तेव तद्वृत्तिं बुद्धिवृत्तिम् अनुपतति। नन्वसङ्क्रान्ता कथं सङ्क्रान्तेव? कथं वा वृत्तिं विना अनुपतति? इत्यत आह, तस्याश्च इति।—प्राप्तश्चैतन्यापग्रह उपरागो येन रूपेण तत्तथा, प्राप्तचैतन्योपग्रहं रूपं यस्याः सा तथोक्ता। एतदुक्तं भवति—यथा निर्मले जलेऽसङ्क्रान्तोऽपि चन्द्रमाः सङ्क्रान्तप्रतिविम्बतया सङ्क्रान्त इव, एवमवाप्यसङ्क्रान्ताऽपि सङ्क्रान्तप्रतिविम्बा चितिशक्ति सङ्क्रान्तेव, तेन बुद्ध्यात्मत्वमापन्ना बुद्धिवृत्तिमनुपततीति, तदनेनानुपश्य इति व्याख्यातं तामनुकारेण पश्यतीत्यनुपश्य इति॥ २०॥

द्रष्टृ-दृश्ययोः स्वरूपमुक्त्वा स्वस्वामिलक्षणसम्बन्धाङ्गं दृश्यस्य द्रष्ट्रर्थत्वमाह—तदर्थ एव दृश्यस्यात्मा इति सूत्रम्।

व्याचष्टे, दृशिरूपस्य इति।—दृशिरूपस्य पुरुषस्य भोक्तुः कर्मरूपतां भोग्यताम् आपन्नं दृश्यम् इति तस्मात् तदर्थ एव द्रष्ट्रर्थ एव दृश्यस्यात्मा भवति न तु दृश्यार्थः। ननु नात्माऽऽत्मार्थः? इत्यत आह, स्वरूपं भवति इति।—एतदुक्तं भवति—सुखदुःखात्मकं दृश्यं भोग्यं, सुखदुःखे चानुकूले अप्रतिकूलयितृणी तत्त्वेन तदर्थे एव व्यवतिष्ठेते, विषया अपि हि शब्दादयस्तादात्म्यादेव चानुकूलयितारः प्रतिकूलयितारश्च, न चैषामात्मैवानुकूलनीयः प्रतिकूलनीयश्च, स्वात्मनि वृत्तिविरोधात्, अतः पारिशेष्याच्चितिशक्तिरेवानुकूलनीया च प्रतिकूलनीया च, तस्मात् तदर्थमेव दृश्यं न तु दृश्यार्थम्। अतश्च तदर्थ एव दृश्यस्यात्मा न दृश्यार्थो यत् स्वरूपमस्य यावत् पुरुषार्थमनुवर्त्तते, निर्वर्त्तिते च

प्रतिलब्धात्मकं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यत इति, स्वरूपहानादस्य नाशः प्राप्तः, न तु विनश्यति ॥ २१ ॥

कस्मात् ?

**कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् ॥ २२ ॥**

कृतार्थमेकं पुरुषं प्रति दृश्यं नष्टमपि नाशं प्राप्तमपि अनष्टं तत्, अन्यपुरुषसाधारणत्वात् । कुशलं पुरुषं प्रति नाशं प्राप्तमप्यकुशलान् पुरुषान् प्रत्यकृतार्थमिति तेषां दृशेः कर्मविषयतामापन्नं लभत एव पररूपेणात्मरूपमिति, अतश्च

---

पुरुषार्थं निवर्त्तत इत्याह, तत्स्वरूपन्तु इति ।—स्वरूपन्तु दृश्यस्य जड़ं पररूपेण आत्मरूपेण चैतन्येन प्रतिलब्धात्मकम् अनुभूतस्वरूपं भोगापवर्गार्थतायां कृतायां पुरुषेण न दृश्यते, भोगः सुखाद्याकारशब्दाद्यनुभवः, अपवर्गः सत्त्वपुरुषान्यताऽनुभवः, तदेतदुभयमप्यजानती जड़ाया बुद्धेः पुरुषच्छायाऽऽपत्त्येति पुरुषस्यैव, तथा च पुरुषभोगापवर्गयोः कृतयोः दृश्यस्य भोगापवर्गार्थता समाप्यत इति भोगापवर्गतार्थतायां कृतायामित्युक्तम् । अवान्तरे चोदयति—स्वरूपहानात् इति । परिहरति—न तु विनश्यति इति ॥ २१ ॥

नन्वत्यन्तानुपलभ्यं कथं न विनश्यति ? इत्याशयवान् पृच्छति—कस्मात् ? इति ।

सूत्रेणोत्तरमाह, कृतार्थमित्यादिना तदन्यसाधारणत्वादित्यन्तेन ।—कृतोऽर्थो यस्य पुरुषस्य स तथा, तं प्रति नष्टमप्यनष्टं तत् दृश्यं, कुतः ? सर्वान् पुरुषान् कुशलान् अकुशलान् प्रति साधारणत्वात् ।

व्याचष्टे, कृतार्थमेकम् इति ।—नाशः अदर्शनम्, अनष्टन्तु दृश्यमन्यपुरुषसाधारणत्वात्, तस्मात् दृश्यात् परस्यात्मनः चैतन्यं रूपं तेन, तदिह श्रुतिस्मृतीतिहासपुराणप्रसिद्धमव्यक्तमनवयवमेकमनाश्रयं व्यापि नित्यं विश्वकार्य्यशक्तिमत् यद्यपि कुशलेन तं प्रति कृतकार्य्यं न दृश्यते तथाऽप्यकुशलेन दृश्यमानं न नास्ति, न हि रूपमन्धेन न दृश्यत इति चक्षुष्मताऽपि दृश्यमानमभावप्राप्तं भवति, न च प्रधानवदेक एव पुरुषः, तन्नानात्वस्य जन्ममरणसुखदुःखोपभोगमुक्तिसंसारव्यवस्थया सिद्धेः, एकत्वश्रुतीनाञ्च प्रमाणान्तरविरोधात् कथञ्चित् देशकालविभागाभावेन भक्त्याऽप्युपपत्तेः, प्रकृत्येकत्वपुरुषनानात्वयोश्च श्रुत्यैव साक्षात् प्रतिपादनात् "अजामेकां लोहितशुक्लकृष्णां बह्वीः

दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगो व्याख्यात इति, तथा चोक्तं धर्मिणामनादिसंयोगात् धर्ममात्राणामप्यनादिः संयोग इति ॥ २२ ॥

संयोगस्वरूपाभिधित्सयेदं सूत्रं प्रववृते ।

**स्व-स्वामिशक्त्योः स्वरूपोपलब्धिहेतुसंयोगः ॥ २३ ॥**

पुरुषः स्वामी दृश्येन स्वेन दर्शनार्थं संयुक्तः, तस्मात् संयोगात् दृश्यस्योपलब्धिर्या स भोगः, या तु द्रष्टुः स्वरूपोपलब्धिः सोऽपवर्गः । दर्शनकार्य्यावसानः संयोग इति दर्शनं वियोगस्य

---

प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥" इति श्रुतिः । अस्या एव श्रुतेश्चानेन सूत्रेणार्थोऽनूदित इति । यतो दृश्यं नष्टमप्यनष्टं पुरुषान्तर प्रत्यस्ति, अतो दृग्दर्शनशक्त्योर्नित्यत्वादनादिः संयोगो व्याख्यातः । अत्रैवागमिनामनुमतिमाह, तथा चोक्तम् इति ।—धर्मिणां गुणानाम् आत्मभिरनादिसंयोगात् धर्ममात्राणां महदादीनामप्यनादिः संयोग इति । एकैकस्य महदादेः संयोगोऽनादिरप्यनित्य एव यद्यपि तथाऽपि सर्वेषां महदादीनां नित्यः, पुरुषान्तराणां साधारणत्वादत उक्त, धर्ममात्राणाम् इति ।—मात्रग्रहणेन व्याप्तिं गमयति, अत एतत् भवति, यद्यप्येकस्य महतः संयोगोऽतीततामापन्नः तथाऽपि महदन्तरस्य पुरुषाणां संयोगो नातीत इति नित्य उक्तः ॥ २२ ॥

तदेवं तादर्थ्यं संयोगकारणे उक्ते, प्रासङ्गिके प्रधाननित्यत्वे संयोगसामान्यनित्यत्वे हेतौ चोक्ते, संयोगस्य यत् स्वरूपम् असाधारणो विशेष इति यावत् तदभिधित्सयेदं सूत्रं प्रववृते, स्व-स्वामिशक्त्योः स्वरूपोपलब्धिहेतुः संयोग इति ।—यतो दृश्यं तदर्थमतत्सञ्जनितोपकारं भजमानः पुरुषस्तस्य स्वामी भवति, भवति च दृश्यमस्य स्वं, स चानयोः संयोगः शक्तिमात्रेण व्यवस्थितस्तत्स्वरूपोपलब्धिहेतुः ।

तदेतद्भाष्यमवद्योतयति, पुरुष इति ।—पुरुषः स्वामी योग्यतामात्रेण दृश्येन स्वेन योग्यतयैव दर्शनार्थं संयुक्तः । शेषं सुगमम् । स्यादेतत्, द्रष्टुः स्वरूपोपलब्धिरपवृज्यते-

कारणमुक्तं, दर्शनमदर्शनस्य प्रतिद्वन्द्वीति अदर्शनं संयोगनिमित्तमुक्तं, नात्र दर्शनं मोक्षकारणम्, अदर्शनाभावादेव बन्धाभावः स मोक्ष इति, दर्शनस्य भावे बन्धकारणस्यादर्शनस्य नाश इत्यतो दर्शनज्ञानं कैवल्यकारणमुक्तम्। किञ्चेदमदर्शनं नाम? किं गुणानामधिकारः? आहोस्वित् दृशिरूपस्य स्वामिनो दर्शितविषयस्य प्रधानचित्तस्यानुत्पादः? स्वस्मिन् दृश्ये विद्यमाने दर्शनाभावः। किमर्थवत्ता गुणानाम्? अथाविद्या स्वचित्तेन सह निरुद्धा स्वचित्तस्योत्पत्तिबीजम्? किं स्थितिसंस्कारक्षये गतिसंस्काराभिव्यक्तिः? यत्रेदमुक्तं प्रधानं

ऽनेनेत्यपवर्ग उक्तः, न च मोक्षः साधनवान्, तथा सत्ययं मोक्षत्वादेव च्यवेत? इत्यत आह—दर्शनकार्य्यावसान इति। दर्शनकार्य्यावसानो बुद्धिविशेषेण सह पुरुषविशेषस्य संयोग इति दर्शनं वियोगकारणमुक्तं, कथं पुनर्दर्शनकार्य्यावसानत्वं संयोगस्य? इत्यत आह—दर्शनम् इति। ततः किम्? इत्यत आह, अदर्शनम् इति।—अदर्शनम् अविद्या संयोगनिमित्तमुक्तम्। उक्तमर्थं स्पष्टयति—नात्र इति। ननु दर्शनमदर्शनं विरोधिनं विनिवर्त्तयतु, बन्धस्य कुतो निवृत्तिः? इत्यत आह, दर्शनस्य इति।—बुद्ध्यादिविविक्तस्यात्मनः स्वरूपावस्थानं मोक्ष उक्तः, न तस्य साधनं दर्शनम्, अपि त्वदर्शननिवृत्तिरित्यर्थः। असाधारणं संयोगे हेतुमदर्शनविशेषं ग्रहीतुमदर्शनमात्रं विकल्पयति—किञ्चेदम् इति। पर्य्युदासं गृहीत्वाऽऽह, किं गुणानामधिकारः? इति।—अधिकारः कार्य्यारम्भणसामर्थ्यं, ततो हि संयोगः संसारहेतुरुपजायते। प्रसज्यप्रतिषेधं गृहीत्वा द्वितीयं विकल्पमाह, आहोस्वित् इति।—दर्शितो विषयः शब्दादिः सत्त्वपुरुषान्यता च येन चित्तेन तस्य तद्विषयस्यानुत्पादः। एतदेव स्फोरयति, स्वस्मिन् इति।—दृश्ये शब्दादौ सत्त्वपुरुषान्यतायाञ्चेति तावदेव प्रधानं विचेष्टते न यावत् द्विविधदर्शनमभिनिवर्त्तयति, निष्पादितोभयदर्शने तु विनिवर्त्तते इति। पर्य्युदास एव तृतीयं विकल्पमाह, किमर्थवत्ता गुणानाम् इति।—सत्कार्य्यवादसिद्धौ हि भाविनावपि भोगापवर्गावव्यपदेश्यतया स्त इत्यर्थः। पर्य्युदास एव चतुर्थं विकल्पमाह, अथाविद्या इति।—प्रतिसर्गकाले स्वचित्तेन सह निरुद्धा प्रधानसाम्यमागता वासनारूपेण स्वचित्तोत्पत्तिबीजं, तेन दर्शनादन्याऽविद्या वासनैवादर्शनमुक्ता। पर्य्युदास एव पञ्चमं विकल्पमाह, किं स्थिति इति।—स्थितिसंस्कारस्य प्रधानवर्त्तिनः

स्थित्यैव वर्त्तमानं विकाराकरणादप्रधानं स्यात्, तथा गत्यैव वर्त्तमानं विकारनित्यत्वादप्रधानं स्यात्, उभयथा चास्य प्रवृत्तिः प्रधानव्यवहारं लभते नान्यथा, कारणान्तरेष्वपि कल्पितेष्वेव समानश्चर्चः। दर्शनशक्तिरेवादर्शनमित्येके, प्रधानस्यात्मख्यापनार्था प्रवृत्तिः इति श्रुतेः, सर्वबोध्यबोधसमर्थः प्राक् प्रवृत्तेः पुरुषो न पश्यति, सर्वकार्य्यकरणसमर्थं दृश्यं तदा न दृश्यत इति। उभयस्याप्यदर्शनं धर्म इत्येके, तत्रेदं दृश्यस्य स्वात्मभूतमपि पुरुषप्रत्ययापेक्षं दर्शनं दृश्य-

साम्यपरिणामपरम्परावाहिनः, क्षये गतिः महदादिविकारारम्भः, तद्धेतुः संस्कारः प्रधानस्य गतिसंस्कारस्तस्याभिव्यक्तिः कार्य्योन्मुखत्वम्। तदुभयसंस्कारसद्भावे मतान्तरानुमतिमाह यत्रेदमुक्तम् इति।—ऐकान्तिकत्वं व्यासेधद्भिः। प्रधीयते जन्यते विकारजातमनेनेति प्रधानं, तच्चेत् स्थित्यैव वर्त्तेत न कदाचित् गत्या, ततो विकाराकरणान्न प्रधीयते तेन किञ्चिदित्यप्रधानं स्यात्? अथ गत्यैव वर्त्तेत न कदाचिदपि स्थित्या? तत्राह, तथा गत्यैव इति।—क्वचित्पाठः स्थित्यै गत्यै इति, तादर्थ्ये चतुर्थी एवकारश्च द्रष्टव्यः। स्थित्यै चेन्न वर्त्तेत न क्वचिद्विकारी विनश्येत, तथा च भावस्य सतोऽविनाशिनो नोत्पत्तिरपीति विकारत्वादेव च्यवेत, एवञ्च न प्रधीयते अत्र किञ्चिदित्यप्रधानं स्यात्, तदुभयथा स्थित्या गत्या चास्य प्रवृत्तिः प्रधानव्यवहारं लभते, नान्यथा एकान्ताभ्युपगमे। न केवलं प्रधाने, कारणान्तरेषु अपि परब्रह्म-तन्मायापरमाण्वादिषु कल्पितेषु समानः चर्चो विचारः, तान्यपि हि स्थित्यैव वर्त्तमानानि विकाराकरणादकारणानि स्युः, गत्यैव वर्त्तमानानि विकारनित्यत्वादकारणानि स्युरिति च। पर्य्युदास एव च षष्ठं कल्पमाह, दर्शनशक्तिरेव इति।—यथा प्रजापतिव्रते "नेक्षेतोद्यन्तमादित्यम्" इति अनीक्षणप्रत्यासन्नः सङ्कल्पो गृह्यते, एवमिहापि दर्शननिषेधे तत्प्रत्यासन्ना तन्मूला शक्तिरुच्यते, सा च दर्शनं भोगादिलक्षणं प्रसोतुं दृश्येन योजयतीति। अत्रैव श्रुतिमाह—प्रधानस्य इति। स्यादेतत्, प्रधानमात्मख्यापनार्थं प्रवर्त्तत इति श्रुतिराह, न त्वात्मदर्शनशक्तिः प्रवर्त्तत इत्यत आह, सर्वबोध्यबोधसमर्थ इति।—प्राक् प्रवृत्तेः प्रधानस्य नात्मख्यापनमात्रं प्रवृत्तौ प्रयोजकम्, असामर्थ्ये तदयोगात्; तस्मात् सामर्थ्यं प्रवृत्तेः प्रयोजकमिति श्रुत्याऽर्थादुक्तमित्यर्थः। दर्शनशक्तिः प्रधानाश्रयेत्यङ्गीकृत्य षष्ठः कल्पः। इमामेवोभयाश्रयामास्थाय सप्तमं कल्पमाह, उभयस्याप्यदर्शनम् इति।—उभयस्य

धर्मत्वेन भवति, तथा पुरुषस्यानात्मभूतमपि दृश्यप्रत्ययापेक्षं पुरुषधर्मत्वेनेव दर्शनमवभासते। दर्शनज्ञानमेवादर्शनमिति केचिदभिदधति, इत्येते शास्त्रगता विकल्पाः, तत्र विकल्पबहुत्वमेतत् सर्वपुरुषाणां गुणसंयोगे साधारणविषयम् ॥ २३ ॥

यस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोगः—

**तस्य हेतुरविद्या ॥ २४ ॥**

विपर्य्ययज्ञानवासनेत्यर्थः। विपर्य्ययज्ञानवासनावासिता

---

पुरुषस्य च दृश्यस्य चादर्शनं दर्शनशक्तिर्धर्म इत्येके। स्यादेतत्, मृष्यामहे दृश्यस्येति, तस्य सर्वशक्त्याश्रयत्वात्, न द्रष्टुरिति पुनर्मृष्यामः, न हि तदाधारा ज्ञानशक्तिः, तत्र ज्ञानस्यासमवायात्, अन्यथा परिणामापत्तिः? इत्यत आह, तत्रेदम् इति।—भवतु दृश्यात्मकं, तथाऽपि तस्य जड़त्वेन तद्गतशक्तिकार्य्यं दर्शनमपि जड़मिति न शक्यं तद्धर्मत्वेन विज्ञातुं, जड़स्य स्वयमप्रकाशत्वात्, अतो दृशेरात्मनः प्रत्ययं चैतन्यच्छायापत्तिकमपेक्ष्य दर्शनं दृश्यधर्मत्वेन भवति विज्ञायते, विषयेण विषयिणः उपलक्षणात्। नन्वेतावताऽपि दृश्यधर्मत्वमस्य ज्ञानस्य भवति, न तु पुरुषधर्मत्वमपि? इत्यत आह, तथा पुरुषस्य इति।—सत्यं पुरुषस्यानात्मभूतमेव, तथाऽपि दृश्यबुद्धिसत्त्वस्य यः प्रत्ययः चैतन्यच्छायापत्तिस्तमपेक्ष्य पुरुषधर्मत्वेनेव न तु पुरुषधर्मत्वेन। एतदुक्तं भवति—चैतन्यबिम्बोद्ग्राहितया बुद्धिचैतन्ययोरभेदात् बुद्धिधर्माश्चैतन्यधर्मा इव चकासति इति। अष्टमं कल्पमाह, दर्शनज्ञानम् इति।—ज्ञानमेव शब्दादीनामदर्शनं, न तु सत्त्वपुरुषान्यताया इति केचित्, यथा चक्षू रूपे प्रमाणमपि रसादावप्रमाणमुच्यते। एतदुक्तं भवति सुखाद्याकारशब्दादिज्ञानानि स्वसिद्ध्यनुगुणतया द्रष्टृ-दृश्यसंयोगमाक्षिपन्तीति। तदेवं विकल्पाश्चतुर्थविकल्पं स्वीकर्त्तुमितरेषां विकल्पानां साङ्ख्यशास्त्रगतानां सर्वपुरुषसाधारण्येन भोगवैचित्र्याभावः। प्रसङ्गेन दूषयति—इत्येते शास्त्रगता इति ॥ २३ ॥

चतुर्थं विकल्पं निर्धारयितुं सूत्रमवतारयति, यस्तु प्रत्यक्चेतनस्य स्वबुद्धिसंयोग इति।—प्रति प्रतीपम्, अञ्चति प्राप्नोति इति प्रत्यक्, असाधारणस्तु संयोग एकैकस्य पुरुषस्यैकयैकया बुद्ध्या वैचित्र्यहेतुः।

सूत्रं पठति—तस्य हेतुरविद्या इति।

नन्वविद्या विपर्य्ययज्ञानं, तस्य भोगापवर्गयोरिव स्वबुद्धिसंयोगो हेतुः, असंयुक्तायां बुद्धौ तदनुत्पत्ते, तत् कथमविद्या संयोगभेदस्य हेतुः? इत्यत आह, विपर्य्ययज्ञानवासना इति।—सर्गान्तरीयाया अविद्यायाः स्वचित्तेन सह निरुद्धाया

न कार्य्यनिष्ठां पुरुषख्यातिं बुद्धिः प्राप्नोति साधिकारा पुनरावर्त्तते, सा तु पुरुषख्यातिपर्य्यवसाना कार्य्यनिष्ठां प्राप्नोति चरिताधिकारा निवृत्तादर्शना बन्धकारणाभावान्न पुनरावर्त्तते। अत्र कश्चित् षण्डकोपाख्यानेनोद्घाटयति, मुग्धया भार्य्ययाऽभिधीयते—षण्डक आर्य्यपुत्त्र! अपत्यवती मे भगिनी, किमर्थं नाहम्? इति, स तामाह—मृतस्तेऽहमपत्यमुत्पादयिष्यामीति। तथेदं विद्यमानं ज्ञानं चित्तनिवृत्तिं न करोति, विनष्टं करिष्यतीति का प्रत्याशा? तत्राचार्य्यदेशीयो वक्ति—ननु बुद्धिनिवृत्तिरेव मोक्षः, अदर्शनकारणाभावात् बुद्धिनिवृत्तिः, तच्चादर्शनं बन्धकारणं दर्शनान्निवर्त्तते। तत्र चित्तनिवृत्तिरेव मोक्षः, किमर्थमस्थान एवास्य मतिविभ्रमः? ॥ २४ ॥

अपि प्रधानेऽस्ति वासना, तद्वासनावासितञ्च प्रधानं तत्तत्पुरुषसंयोगिनीं तादृशीमेव बुद्धिं सृजति, एवं पूर्वपूर्वसर्गेष्वित्यनादित्वाददोषः। अत एव प्रतिसर्गावस्थायां न पुरुषो मुच्यत इत्याह—विपर्य्ययज्ञान इति। यदा पुरुषख्यातिं कार्य्यनिष्ठां प्राप्ता तदा विपर्य्ययज्ञानवासनायाः बन्धकारणस्याभावान्न पुनरावर्त्तत इत्याह—सा तु इति। अत्र कश्चित् नास्तिकः कैवल्यं षण्डकोपाख्यानेनोपहसति। षण्डकोपाख्यानमाह, मुग्धया इति।—किमर्थमित्यर्थशब्दो निमित्तं लक्षयति, प्रयोजनस्यापि निमित्तत्वात्। षण्डकोपाख्यानसाम्यमापादयति, तथेदम् इति।—इदं विद्यमानं गुणपुरुषान्यताख्यातिज्ञानं चित्तनिवृत्तिं न करोति परवैराग्येण ज्ञानप्रसादमात्रेण ससंस्कारं निरुद्धं विनष्टं करिष्यतीति का प्रत्याशा, यस्मिन् सत्येव यत् भवति तत् तस्य कार्य्यं न तु यस्मिन्नसतीति भावः। अत्र एकदेशिमतेन परिहारमाह, तत्राचार्य्यदेशीय इति।—ईषदपरिसमाप्त आचार्य्य आचार्य्यदेशीयः। आचार्य्यस्तु वायुप्रोक्तकृतलक्षणः "आचिनोति च शास्त्रार्थमाचारे स्थापयत्यपि। स्वयमाचरते यस्मादाचार्य्यस्तेन चोच्यते॥" इति। भोगविवेकख्यातिरूपपरिणतबुद्धिनिवृत्तिरेव मोक्षः, न च बुद्धिस्वरूपनिवृत्तिः, सा च धर्म्ममेघान्तविवेकख्यातिप्रतिष्ठाया अनन्तरमेव भवति सत्यपि बुद्धिस्वरूपमात्रावस्थाने इत्यर्थः। एतदेव स्फोरयति, अदर्शन इति।—अदर्शनस्य बन्धकारणस्याभावात् बुद्धिनिवृत्तिः, तच्चादर्शनं बन्धकारणं दर्शनान्निवर्त्तते, दर्शननिवृत्तिस्तु परवैराग्यसाध्या, सत्यपि बुद्धिस्वरूपावस्थाने मोक्ष इति भावः। एकदेशि-

हेयं दुःखं हेयकारणञ्च संयोगाख्यं सनिमित्तमुक्तम्, अतःपरं हानं वक्तव्यम्।

**तदभावात् संयोगाभावो हानं तत् दृशेः कैवल्यम्॥ २५॥**

तस्यादर्शनस्याभावात् बुद्धिपुरुषसंयोगाभावः आत्यन्तिको बन्धनोपरम इत्यर्थः, एतत् हानं, तत् दृशेः कैवल्यं पुरुषस्यामिश्रीभावः, पुनरसंयोगो गुणैरित्यर्थः। दुःखकारणनिवृत्तौ दुःखोपरमो हानं, तदा स्वरूपप्रतिष्ठः पुरुष इत्युक्तम्॥ २५॥

अथ हानस्य कः प्राप्त्युपायः? इति।

**विवेकख्यातिरविप्लवा हानोपायः॥ २६॥**

सत्त्वपुरुषान्यताप्रत्ययो विवेकख्यातिः, सा तु अनिवृत्तमिथ्याज्ञाना प्लवते, यदा मिथ्याज्ञानं दग्धबीजभावं वन्ध्य-

---

मतमुपन्यस्य स्वमतमाह—तत्र चित्तनिवृत्तिरेव मोक्ष इति। ननूक्तं दर्शने निवृत्तेऽचिराच्चित्तस्वरूपनिवृत्तिर्भवतीति कथं दर्शनकार्या? इत्यत आह, किमर्थमस्थान एवास्य मतिविभ्रम इति।—अयमभिसन्धिः,—यदि दर्शनस्य साक्षाच्चित्तनिवृत्तौ कारणभावमङ्गीकुर्महि तत एवम् उपालभ्येमहि, किन्तु विवेकदर्शनं प्रकर्षकाष्ठां प्राप्तं निरोधसमाधिभावनाप्रकर्षक्रमेण चित्तनिवृत्तिमत्पुरुषस्वरूपावस्थानोपयोगीत्यातिष्ठामहे, तत् कथमुपालभ्येमहि? इति॥ २४॥

तदेवं व्यूहद्वयमुक्त्वा तृतीयव्यूहाभिधानाय सूत्रमवतारयति—हेयं दुःखम् इति।

तदभावात् संयोगाभावो हानं तत् दृशेः कैवल्यम् इति सूत्रम्।

सूत्रं व्याचष्टे, तस्य इति।—अस्ति हि महाप्रलयेऽपि संयोगाभावोऽत उक्तम्—आत्यन्तिक इति। दुःखोपरमो हानमिति पुरुषार्थता दर्शिता। शेषमतिरोहितम्॥२५॥

हानोपायलक्षणं चतुर्थं व्यूहमाख्यातुं सूत्रमवतारयति—अथ इति।

विवेकख्यातिरविप्लवा हानोपाय इति सूत्रम्।—आगमानुमानाभ्यामपि विवेकख्यातिरस्ति, न चासौ व्युत्थानं तत्संस्कारं वा निवर्त्तयति, तदतोऽपि तदनुवृत्तेः, इति तन्निवृत्त्यर्थम् अविप्लवा इति, विप्लवो मिथ्याज्ञानं तद्रहिता। एतदुक्तं भवति—

प्रसवं सम्पद्यते. तदा विधूतक्लेशरजसः सत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्त्तमानस्य विवेकप्रत्ययप्रवाहो निर्मलो भवति, सा विवेकख्यातिरविप्लवा हानस्योपायः, ततो मिथ्याज्ञानस्य दग्धबीजभावोपगमः पुनश्चाप्रसवः, इत्येष मोक्षस्य मार्गो हानस्योपाय इति ॥ २६ ॥

**तस्य सप्तधा प्रान्तभूमिः प्रज्ञा ॥ २७ ॥**

तस्येति प्रत्युदितख्यातेः प्रत्याम्नायः, सप्तधेति अशुद्ध्यावरणमलापगमाच्चित्तस्य प्रत्ययान्तरानुत्पादे सति सप्तप्रकारैव प्रज्ञा विवेकिनो भवति, तद्यथा परिज्ञातं हेयं नास्य पुनः परिज्ञेयमस्ति। क्षीणा हेयहेतवो न पुनरेतेषां क्षेतव्यमस्ति। साक्षात्कृतं निरोधसमाधिना हानम्। भावितो विवेक-

---

श्रुतमयेन ज्ञानेन विवेकं गृहीत्वा युक्तिमयेन च व्यवस्थाप्य दीर्घकालनैरन्तर्य्यसत्कारासेवितायाः भावनायाः प्रकर्षपर्य्यन्तं समाधिगता साक्षात्कारवती विवेकख्यातिर्निवर्त्तितसवासनमिथ्याज्ञाना निर्विप्लवा हानोपाय इति। शेषं भाष्यं सुगमम् ॥ २६ ॥

विवेकख्यातिनिष्ठायाः स्वरूपमाह सूत्रेण—तस्य सप्तधा प्रान्तभूमिः प्रज्ञा इत्यनेन।

व्याचष्टे, तस्य इति।—प्रत्युदितख्यातेः वर्त्तमानख्यातेर्योगिनः। प्रत्याम्नायः परामर्शः। अशुद्धिरेवावरणं चित्तसत्त्वस्य तदेव मलं तस्यापगमात्, चित्तस्य प्रत्ययान्तरानुत्पादे तामसराजसव्युत्थानप्रत्ययानुत्पादे, निर्विप्लवविवेकख्यातिनिष्ठामापन्नस्य सप्तप्रकारैव प्रज्ञा विवेकिनो भवति। विषयभेदात् प्रज्ञाभेदः, प्रकृष्टोऽन्तो यासां भूमीनाम् अवस्थानां तास्तथोक्ताः, यतः परं नास्ति सम्प्रकर्षः, प्रान्ता भूमयो यस्याः प्रज्ञाया विवेकख्यातेः सा तथोक्ता। ता एव सप्तप्रकाराः प्रज्ञाभूमीरुदाहरति—तद्यथा इति। तत्र पुरुषप्रयत्ननिष्पाद्यासु चतसृषु भूमिषु प्रथमामुदाहरति, परिज्ञातं हेयम् इति।—यावत् किल प्राधानिकं तत् सर्वं परिणामतापसंस्कारैः गुणवृत्तिविरोधात् दुःखमेवेति हेयं, तत् परिज्ञातम्। प्रान्ततां दर्शयति—नास्य पुनः किञ्चित् परिज्ञेयमस्ति इति। द्वितीयामाह—क्षीणा इति। प्रान्ततामाह—न पुनः इति। तृतीयामाह, साक्षात् कृतम् इति।—प्रत्यक्षेण निश्चितं मया सम्प्रज्ञातावस्थायामेव निरोधसमाधिसाध्यं हानं, न पुनरस्मात् परं निश्चेतव्यमस्तीति शेषः। चतुर्थीमाह, भावित इति।—भावितो निष्पादितो विवेक-

ख्यातिरूपो हानोपायः। इत्येषा चतुष्टयी कार्य्या विमुक्तिः प्रज्ञायाः। चित्तविमुक्तिस्तु त्रयी, चरिताधिकारा बुद्धिः। गुणा गिरिशिखरकूटच्युता इव ग्रावाणो निरवस्थानाः स्वकारणे प्रलयाभिमुखाः सह तेनास्तं गच्छन्ति, न चैषां विप्रलीनानां पुनरस्त्युत्पादः प्रयोजनाभावादिति। एतस्यामवस्थायां गुणसम्बन्धातीतः स्वरूपमात्रज्योतिरमलः केवली पुरुषः इति। एतां सप्तविधां प्रान्तभूमिप्रज्ञामनुपश्यन् पुरुषः कुशल इत्याख्यायते, प्रतिप्रसवेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति ॥ २७ ॥

सिद्धा भवति विवेकख्यातिर्हानोपायः, न च सिद्धिरन्तरेण साधनमित्येतदारभ्यते।

**योगाङ्गानुष्ठानादशुद्धिक्षये ज्ञानदीप्तिरा-विवेकख्यातेः ॥ २८ ॥**

---

ख्यातिरूपो हानोपायः, नास्याः परं भावनीयमस्तीति शेषः। एषा चतुष्टयी कार्य्या विमुक्तिः समाप्तिः, कार्य्यतया प्रयत्नव्याप्यता दर्शिता। क्वचित् पाठः कार्य्यविमुक्तिरिति, कार्य्यान्तरेण विमुक्तिः प्रज्ञाया इत्यर्थः। प्रयत्ननिष्पाद्यानुनिष्पादनीयामप्रयत्नसाध्यां चित्तविमुक्तिमाह—चित्तविमुक्तिस्तु त्रयी इति। प्रथमामाह, चरिताधिकारा बुद्धिः इति।—कृतभोगापवर्गकार्य्येत्यर्थः। द्वितीयामाह—गुणा इति। प्रान्त्यामाह—न चैषाम् इति। तृतीयामाह—एतस्यामवस्थायाम् इति। एतस्यामवस्थायां जीवन्नेव पुरुषः कुशलो मुक्तः इत्युच्यते चरमदेहत्वादित्याह—एताम् इति। अनौपचारिकं मुक्तमाह, प्रतिप्रसवे इति।—प्रधानलयेऽपि चित्तस्य मुक्तः कुशल इत्येव भवति गुणातीतत्वादिति ॥ २७ ॥

तदेवं चतुरो व्यूहानुक्त्वा तन्मध्यपतितस्य हानोपायस्य विवेकख्यातेर्गोदोहनादिवत् प्रागसिद्धेः असिद्धस्य चोपायत्वाभावात् सिद्ध्युपायान् वक्तुमारभत इत्याह—सिद्धा इति।

तत्राभिधास्यमानानां साधनानां येन प्रकारेण विवेकख्यात्युपायत्वं तत् दर्शयति—सूत्रेण योगेत्यादिना ख्यातेरित्यन्तेन।

योगाङ्गानि अष्टावभिधायिष्यमाणानि, तेषामनुष्ठानात् पञ्चपर्वणो विपर्ययस्याशुद्धिरूपस्य क्षयः नाशः, तत्क्षये सम्यग्ज्ञानस्याभिव्यक्तिः, यथा यथा च साधनान्यनुष्ठीयन्ते तथा तथा तनुत्वमशुद्धिरापद्यते, यथा यथा च क्षीयते तथा तथा क्षयक्रमानुरोधिनी ज्ञानस्यापि दीप्तिर्विवर्द्धते, सा खल्वेषा विवृद्धिः प्रकर्षमनुभवति आ विवेकख्यातेः आ गुणपुरुषस्वरूपविज्ञानादित्यर्थः। योगाङ्गानुष्ठानमशुद्धेर्वियोगकारणं यथा परशुश्छेद्यस्य, विवेकख्यातेस्तु प्राप्तिकारणं यथा धर्मः सुखस्य, नान्यथा कारणम्। कति चैतानि कारणानि शास्त्रे भवन्ति ? नवैवेत्याह, तद्यथा—"उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः। वियोगान्यत्वधृतयः कारणं नवधा स्मृतम् ॥" इति। तत्रोत्पत्तिकारणं मनो भवति विज्ञानस्य। स्थितिकारणं मनसः पुरुषार्थता, शरीरस्येवाहार इति। अभिव्यक्तिकारणं यथा रूपस्याऽऽलोकस्तथा रूपज्ञानम्।

---

योगाङ्गानि हि यथायोगं दृष्टादृष्टद्वारेणाशुद्धिं क्षिण्वन्ति, पञ्चपर्वणो विपर्ययस्येत्युपलक्षणं पुण्यापुण्ययोरपि जात्यायुर्भोगहेतुनाऽशुद्धिरूपत्वादिति। शेषं सुगमम्। नानाविधस्य कारणभावस्य दर्शनात् योगाङ्गानुष्ठानस्य कीदृशं कारणत्वम् ? इत्यत आह, योगाङ्गानुष्ठानम् इति।—अशुद्धा वियोजयति बुद्धिसत्त्वमिति अशुद्धेर्वियोगकारणम्। दृष्टान्तमाह, यथा परशुः इति।—परशुः छेद्यं वृक्षं मूलेन वियोजयति, अशुद्धा वियोजयत् बुद्धिसत्त्वं विवेकख्यातिं प्रापयति। यथा धर्मः सुखस्य तथा योगाङ्गानुष्ठानं विवेकख्यातेः प्राप्तिकारणं नान्येन प्रकारेणेत्याह—विवेकख्यातेस्तु इति। नान्यथेति प्रतिषेधश्रवणात् पृच्छति—कति चैतानि ? इति। उत्तरं—नवैव इति। तानि दर्शयति कारिकया—तद्यथोत्पत्ति इति। अत्रोदाहरणान्याह, तत्रोत्पत्तिकारणम् इति।—मनो विज्ञानमव्यपदेश्यावस्थातोऽपनीय वर्त्तमानावस्थामापादयदुत्पत्तिकारणं विज्ञानस्य। स्थितिकारणं मनसः पुरुषार्थता, अस्मिताया उत्पन्नं मनस्तावदवतिष्ठते न यावत् द्विविधं पुरुषार्थमभिनिर्वर्त्तयति, अथ निर्वर्त्तितपुरुषार्थद्वयं स्थितेरपैति, तस्मात् स्वकारणादुत्पन्नस्य मनसोऽनागतपुरुषार्थता स्थितिकारणम्। दृष्टान्तमाह—शरीरस्येवाहार इति। प्रत्यक्षज्ञाननिमित्तम् इन्द्रियद्वारा

विकारकारणं मनसो विषयान्तरं, यथा अग्निः पाक्यस्य। प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य। प्राप्तिकारणं योगाङ्गानुष्ठानं विवेकख्यातेः। वियोगकारणं तदेवाशुद्धेः। अन्यत्वकारणं यथा सुवर्णस्य सुवर्णकारः। एवमेकस्य स्त्रीप्रत्ययस्य अविद्या मूढ़त्वे, द्वेषो दुःखत्वे, रागः सुखत्वे, तत्त्वज्ञानं माध्यस्थ्ये।

---

स्वतो वा विषयस्य संस्क्रिया अभिव्यक्तिः, तस्याः कारणं यथा रूपस्य आलोकः। विकारकारणं मनसो विषयान्तरं, यथा हि मृकण्डोः समाहितमनसो वल्लकीविपञ्चमानपञ्चमस्वरश्रवणसमनन्तरमुन्मीलिताक्षस्य स्वरूपलावण्ययौवनसम्पन्नामप्सरसमुल्लोचामीक्षमाणस्य समाधिमपहाय तस्यां सक्तं मनो बभूवेति। अत्रैव निदर्शनमाह,यथाऽग्निः इति।—यथाऽग्निः पाक्यस्य तण्डुलादेः कठिनावयवसन्निवेशस्य प्रशिथिलावयवसंयोगलक्षणस्य विकारस्य कारणम्। सत एव विषयस्य प्रत्ययकारणं धूमज्ञानमग्निज्ञानस्य इति। ज्ञायत इति ज्ञानम्, अग्निश्चासौ ज्ञानं चेति अग्निज्ञानं तस्येति। एतदुक्तं भवति—वर्त्तमानस्यैवाग्नेः ज्ञेयस्य प्रत्ययकारणतया कारणमिति। प्राप्तिकारणम् औत्सर्गिकी निरपेक्षाणां कारणानां कार्य्यक्रिया प्राप्ति, तस्याः कुतश्चिदपवादोऽप्राप्तिः, यथा निम्नोपसर्पणस्वभावानामपां प्रतिबन्धः सेतुना, तथेहापि बुद्धिसत्त्वस्य सुखप्रकाशशीलस्य स्वाभाविकी सुखविवेकख्यातिजनकता प्राप्तिः, सा कुतश्चिदधर्मात्तमसो वा प्रतिबन्धान्न भवति, धर्मात् योगाङ्गानुष्ठानाद्वा तदपनये तदप्रतिबद्धवृत्तिस्वभावत एव तज्जनकतया तदाप्नोति, यथा वक्ष्यति, "निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत्" इति। तदेवं विवेकख्यातिलक्षणकार्य्यापेक्षया प्राप्तिकारणमुक्तम्, अवान्तरकार्य्यापेक्षया तदेव वियोगकारणमित्याह—वियोगकारणम् इति। अन्यत्वकारणमाह, यथा सुवर्णस्य सुवर्णकार इति।—कटककुण्डलकेयूरादिभ्यो भिन्नाभिन्नस्य भेदविवक्षया कटकादिभिन्नस्याभेदविवक्षया कटकादभिन्नस्य सुवर्णस्य कुण्डलादन्यत्वं, तथा च कटककारः सुवर्णकारः कुण्डलादभिन्नात् सुवर्णादन्यत् कुर्व्वन्नन्यत्वकारणम्। अग्निरपि पाक्यस्यान्यत्वकारणं यद्यपि, तथाऽपि धर्म्मिणो धर्म्मयोः पुलाकत्व-तण्डुलत्वयोर्भेदाविवक्षया धर्म्मयोरुपजनापायेऽपि धर्म्म्यनुवर्त्तत इति न तस्यान्यत्व शक्यं वक्तुम्, इति विकारकारणत्वमुक्तम्, इति न सङ्करः, न च संस्थानभेदो धर्म्मिणोऽन्यत्वकारणमिति व्याख्येयं, सुवर्णकार इत्यस्यासङ्गतेः। वाह्यमन्यत्वकारणमुपन्यस्याध्यात्मिकमुदाहरति, एवमेकस्य इति।—अविद्या कमनीयेयं कन्येत्यादिज्ञानं, सम्मोहयोगात् स एव स्त्रीप्रत्ययी मूढ़ो विषयी

उत्क्रान्तिश्च प्रयाणकाले भवति, तां वशित्वेन प्रतिपद्यते ॥ ३९ ॥

**समानजयाज्ज्वलनम् ॥ ४० ॥**

जितसमानस्तेजस उपध्मानं कृत्वा ज्वलति ॥ ४० ॥

**श्रोत्राकाशयोः सम्बन्धसंयमात् दिव्यं श्रोत्रम् ॥ ४१ ॥**

सर्वश्रोत्राणामाकाशं प्रतिष्ठा सर्वशब्दानाञ्च। यथोक्तं "तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवति" इति। तच्चै-

---

इति।—उदाने कृतसंयमस्तज्जयाज्जलादिभिर्न प्रतिहन्यते, उत्क्रान्तिश्चार्चिरादि-मार्गेण भवति प्रयाणकाले, तस्मात्ताम् उत्क्रान्तिं वशित्वेन प्रतिपद्यते, प्राणादिसंयमात् तद्विजये विभूतय एताः क्रिया-स्थानविजयादिभेदात् प्रतिपत्तव्याः ॥ ३९ ॥

समानमित्यादि सूत्रम्।

तेजसः शारीरस्योपध्मानम् उत्तेजनम् ॥ ४० ॥

स्वार्थसंयमादन्वाचयशिष्टं श्रावणाद्युक्तं, सम्प्रति श्रावणाद्यर्थादेव संयमाच्छ्रावणादि भवतीत्याह—श्रोत्र इत्यादि सूत्रम्।

संयमविषयं श्रोत्राकाशयोः सम्बन्धमाधाराधेयभावमाह, सर्व इति।—सर्वश्रोत्राणा-माहङ्कारिकाणामप्याकाशं कर्णशष्कुलीविवरं प्रतिष्ठा, तदायतनं श्रोत्रं, तदुपकारा-पकाराभ्यां श्रोत्रस्योपकारापकारदर्शनात् शब्दानाञ्च श्रोत्रसहकारिणाम्। पार्थिवादिशब्द-ग्रहणे कर्त्तव्ये कर्णशष्कुलीसुषिरवर्त्ति श्रोत्रं स्वाश्रयणभोगताऽसाधारणशब्दमपेक्षते. गन्धादि-गुणसहकारिभिर्घ्राणादिभिर्वाह्ये पृथिव्यादिवर्त्तिगन्धाद्यालोचने कार्य्ये दृष्टम्, आहङ्कारिक-मपि घ्राण-रसन-त्वक् चक्षुः-श्रोत्रं भूताधिष्ठानमेव भूतोपकारापकाराभ्यां घ्राणादीनामुप-कारापकारदर्शनादित्युक्तम्। तच्चेदं श्रोत्रमाहङ्कारिकमयःप्रतिममयस्कान्तमणिकल्पेन वक्तृवक्त्रसमुत्पन्नेन वक्त्रस्थेन शब्देनाकृष्टं स्ववृत्तिपरम्परया वक्तृवक्त्रमागतं शब्दमालोचयति, तथा च दिग्देशवृत्तिशब्दप्रतीतिः प्राणभृन्मात्रस्य नासति बाधकेऽप्रमाणीकृता भविष्यतीति। तथा च पञ्चशिखस्य वाक्यं—"तुल्यदेशश्रवणानामेकदेशश्रुतित्वं सर्वेषां भवति" इति। तुल्यदेशानि श्रवणानि श्रोत्राणि येषां चैत्रादीनां ते तथोक्ताः, सर्वेषां श्रवणान्याकाश-वर्त्तीनीत्यर्थः। तच्च श्रोत्राधिष्ठानमाकाशं शब्दगुण-तन्मात्रादुत्पन्नं शब्दगुणकं, येन

तदाकाशस्य लिङ्गम् अनावरणञ्चोक्तम्; तथाऽमूर्त्तस्यानावरणदर्शनाद्विभुत्वमपि प्रख्यातमाकाशस्य, शब्दग्रहणानुमितं श्रोत्रं, बधिराबधिरयोरेकः शब्दं गृह्णाति अपरो न गृह्णातीति, तस्माच्छ्रोत्रमेव शब्दविषयम् श्रोत्राकाशयोः सम्बन्धे कृतसंयमस्य योगिनो दिव्यं श्रोत्रं प्रवर्त्तते ॥ ४१ ॥

**कायाकाशयोः सम्बन्धसंयमाल्लघुतूलसमापत्तेश्चाकाशगमनम् ॥ ४२ ॥**

यत्र कायस्तत्र आकाशं, तस्य अवकाशदानात् कायस्य, तेन

---

शब्देन सहकारिणा पार्थिवादीन् शब्दान् गृह्णाति, तस्मात् सर्वेषामेकजातीया श्रुतिः शब्दे इत्यर्थः। तदनेन श्रोत्राधिष्ठानत्वमाकाशस्य शब्दगुणत्वञ्च दर्शितम् इति। तच्च एकदेशश्रुतित्वमाकाशस्य लिङ्गं, सा हि एकजातीया शब्दव्यञ्जिका श्रुतिर्यदाश्रया तदेवाकाशशब्दवाच्यं, न ह्यीदृशीं श्रुतिमन्तरेण शब्दव्यक्तिः, न चेदृशी श्रुतिः पृथिव्यादिगुणस्तस्य स्वात्मनि व्यङ्ग्य-व्यञ्जकत्वानुपपत्तेः इति। अनावरणञ्चाकाशलिङ्गं, यद्याकाशं नाभविष्यदन्योऽन्यं सम्पीड़ितानि मूर्त्तानि न सूचीभिरप्यभेत्स्यन्त, ततश्च सर्वैरेव सर्वमावृतं स्यात्, न च मूर्त्तद्रव्याभावमात्रादेवानावरणम्, अस्याभावस्य भावाश्रितत्वेन तदभावेऽभावात्, न च चितिशक्तिस्तस्याश्रया भवितुमर्हति, अपरिणामितया अवच्छेदकत्वाभावात्, न च दिक्कालादयः पृथिव्यादिद्रव्यव्यतिरिक्ताः सन्ति, तस्मात् तादृशः परिणतिभेदो नभस एवेति सर्वमवदातम्। अनावरणे चाकाशलिङ्गे सिद्धे यत्र यत्रानावरणं तत्र सर्वत्राकाशमिति सर्वगतत्वमप्यस्य सिद्धमित्याह—तथा अमूर्त्तस्य इति। श्रोत्रसद्भावे प्रमाणमाह, शब्दग्रहण इति।—क्रिया हि करणसाध्या दृष्टा, यथा छिदादिर्वास्यादिसाध्या, तदिह शब्दग्रहणक्रिययाऽपि करणसाध्यया भवितव्यं, यच्च करणं तच्च श्रोत्रमिति। अथास्याः चक्षुरादय एव कस्मात् कारणं न भवन्ति ? इत्यत आह, बधिराबधिरयोः इति।—अन्वय-व्यतिरेकाभ्यामवधारणम्। उपलक्षणञ्चैतत् त्वग्वातयोश्चक्षुस्तेजसोः रसनोदकयोर्नासिका-पृथिव्योः सम्बन्धसंयमात् दिव्यत्वगाद्यप्यूहनीयम् ॥ ४१ ॥

काय इत्यादि सूत्रम्।

सम्बन्धः प्राप्तिः, तत्र कृतसंयमो जित्वा तत्सम्बन्धं लघुषु तूलादिषु आ-परमाणुभ्यः समापत्तिं लब्ध्वा जितसम्बन्धो लघुः, लघुत्वाच्च जले पादाभ्यां विहरति, ततस्तूर्णनाभितन्तुमात्रे विहृत्य रश्मिषु विहरति, ततो यथेष्टमाकाशगतिः अस्य भवतीति ॥ ४२ ॥

**बहिरकल्पिता वृत्तिर्महाविदेहा ततः प्रकाशावरणक्षयः ॥ ४३ ॥**

शरीरात् बहिर्मनसो वृत्तिलाभो विदेहा नाम धारणा, सा यदि शरीरप्रतिष्ठस्य मनसो बहिर्वृत्तिमात्रेण भवति सा कल्पिता इति उच्यते, या तु शरीरनिरपेक्षा बहिर्भूतस्यैव मनसो बहिर्वृत्तिः सा खलु अकल्पिता, तत्र कल्पितया साधयति अकल्पितां महाविदेहामिति, यया परशरीराणि आविशन्ति योगिनः, ततश्च धारणातः प्रकाशात्मनो बुद्धिसत्त्वस्य यदावरणं क्लेशकर्मविपाकत्रयं रजस्तमोमूलं तस्य च क्षयो भवति ॥ ४३ ॥

---

कायाकाशसम्बन्धसंयमाद्वा लघुनि वा तूलादौ कृतसंयमात् समापत्तिं चेतसस्तत्तत्तदञ्जनतां लब्ध्वेति। सिद्धिक्रममाह—जले इति ॥ ४२ ॥

अपरमपि परशरीरावेशहेतुं संयमं क्लेशकर्मविपाकक्षयहेतुमाह—बहिः…क्षयः इति सूत्रम्।

विदेहामाह—शरीरात् इति। अकल्पितायां महाविदेहाया य उपायस्तत्प्रदर्शनाय कल्पितां विदेहामाह, सा यदि इति।—वृत्तिमात्रं कल्पनाज्ञानमात्रं तेन। महाविदेहामाह—या तु इति। उपायोपेयते कल्पिताकल्पितयोराह—तत्र इति। किं परशरीरावेशमात्रमितः? नेत्याह, ततश्च इति।—ततो धारणातो महाविदेहाया मनःप्रवृत्तेः सिद्धेः, क्लेशश्च कर्म च ताभ्यां विपाकत्रयं जात्यायुर्भोगाः तदेतद्रजस्तमोमूलं, विगलितरजस्तमसः सत्त्वमात्रात् विवेकख्यातिमात्रसमुत्पादात्, तदेतद्विपाकत्रयं रजस्तमोमूलतया तदात्मकं सत् बुद्धिसत्त्वमावृणोति, तत्क्षयाच्च निरावरणं योगिचित्तं यथेच्छं विहरति विजानाति चेति ॥ ४३ ॥

स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वसंयमात् भूतजयः॥ ४४॥

तत्र पार्थिवाद्याः शब्दादयो विशेषाः सहाकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः. एतत् भूतानां प्रथमं रूपम्। द्वितीयं रूपं स्वसामान्यं, मूर्त्तिर्भूमिः, स्नेहो जलं. वह्निरुष्णता, वायुः प्रणामी. सर्वतो गतिराकाश इति, एतत् स्वरूपशब्देन उच्यते,

---

स्थूल इत्यादि सूत्रम्।—स्थूलञ्च स्वरूपञ्च सूक्ष्मञ्च अन्वयश्चार्थवत्त्वञ्चेति स्थूलस्वरूपसूक्ष्मान्वयार्थवत्त्वानि. तेषु संयमात्तज्जयः।

स्थूलमाह, तत्र इति।—पार्थिवाः पाथसीयास्तैजसा वायवीया आकाशीयाः शब्द-स्पर्श-रूप-रस-गन्धा यथासम्भवं विशेषाः षड्ज-गान्धारादयः शीतोष्णादयः नील-पीतादयः कषाय-मधुरादयः सुरभ्यादयः. एते हि नाम-रूपप्रयोजनैः परस्परतो भिद्यन्त इति विशेषाः, एतेषां पञ्च पृथिव्यां, गन्धवर्जं चत्वारोऽप्सु, गन्ध-रसवर्जं त्रयस्तेजसि, गन्ध-रस-रूपवर्जं द्वौ नभस्वति, शब्द एवाकाशे, त एत ईदृशा विशेषाः सहाकारादिभिर्धर्मैः स्थूलशब्देन परिभाषिताः शास्त्रे. तत्रापि पार्थिवास्तावत् धर्माः,—"आकारो गौरवं रौक्ष्यं वरणं स्थैर्य्यमेव च। वृत्तिर्भेदः क्षमा कार्ष्ण्यं काठिन्यं सर्वभोग्यता॥" अपां धर्माः,—"स्नेहः सौक्ष्म्यं प्रभा शौक्ल्यं मार्दवं गौरवञ्च यत्। शैत्यं रक्षा पवित्रत्वं सन्धानञ्चौदका गुणाः॥" तैजसा धर्माः,—"ऊर्द्ध्वभाक् पावकं दग्धृ पाचकं लघु भास्वरम्। प्रध्वंस्योजस्वि वै तेजः पूर्व्वाभ्यां भिन्नलक्षणम्॥" वायवीया धर्माः.—"तिर्य्यग्यानं पवित्रत्वमाक्षेपो नोदनं बलम्। चलमच्छायता रौक्ष्यं वायोर्धर्माः पृथग्विधाः॥" आकाशीया धर्माः,—"सर्व्वतो गतिरव्यूहो विष्टम्भश्चेति च त्रयः। आकाशधर्मा व्याख्याताः पूर्व्वधर्मविलक्षणाः॥" इति। त एत आकारप्रभृतयो धर्मास्तैः सहेति। आकारश्च सामान्य-विशेषौ गोत्वादिः। द्वितीयं रूपमाह, द्वितीयं रूपं स्वसामान्यम् इति।—मूर्त्तिः सांसिद्धिकं काठिन्यं, स्नेहो जलं मज्जा-पुष्टि-बलाधानहेतुः, वह्निरुष्णता औदर्य्ये सौर्य्ये भौमे स सर्व्वत्रैव तेजसि समवेतोष्णतेति। सर्व्वं चैतत् धर्म-धर्म्मिणोरभेदविवक्षया अभिधानं, वायुः प्रणामी वहनशीलः. तदाह—"चलनेन तृणादीनां शरीरस्याटनेन च। महत्त्वं वायुसामान्यं नामित्वमनुमीयते॥" सर्व्वतोगतिराकाशः, सर्व्वत्र शब्दोपलब्धिदर्शनात्, आत्माश्रयाकाशगुणेन हि शब्देन पार्थिवाद-

अस्य सामान्यस्य शब्दादयो विशेषाः। तथा चोक्तम् "एकजातिसमन्वितानामेषां धर्म्ममात्रव्यावृत्तिः" इति। सामान्य-विशेषसमुदायोऽत्र द्रव्यं, द्विष्ठो हि समूहः प्रत्यस्तमितभेदावयवानुगतः शरीरं वृक्षो यूथं वनमिति। शब्देनोपात्तभेदावयवानुगतः समूहः उभये देवमनुष्याः, समूहस्य देवा एको भागः, मनुष्या द्वितीयो भागः, ताभ्यामेव अभिधीयते समूहः। स च भेदाभेद-

---

शब्दोपलब्धिरित्युपपादितमधस्तात्, एतत् स्वरूपशब्देनोक्तम्। अस्यैव मूर्त्त्यादिसामान्यस्य, शब्दादयः षड्जादय उष्णत्वादयः शुक्लत्वादयः कषायत्वादयः सुरभित्वादयो मूर्त्त्यादीनां सामान्यानां भेदाः। सामान्यान्यपि मूर्त्त्यादीनि जम्बीरपनसामलकफलादीनि रसादिभेदात् परस्परं व्यावर्त्तन्ते, तेनैतेषामेते रसादयो विशेषाः। तथा चोक्तम्—एकजातिसमन्वितानां प्रत्येकं पृथिव्यादीनामेकैकया जात्या मूर्त्तिस्नेहादिना समन्वितानामेषां षड्जादिधर्म्ममात्रव्यावृत्तिरिति। तदेवं सामान्यं मूर्त्त्याद्युक्तं विशेषाश्च शब्दादय उक्ताः। ये चाहुः सामान्यविशेषाश्रयो द्रव्यमिति तान् प्रत्याह, सामान्य इति।—सामान्य-विशेषसमुदायोऽत्र दर्शने द्रव्यम्। येऽपि तदाश्रयो द्रव्यमास्थिषत तैरपि तत्समुदायोऽनुभूयमानो नापह्नोतव्यः, न च तदपह्नवे तयोराधारो द्रव्यमिति भवति, तस्मात्तदेवास्तु द्रव्यं, न तु ताभ्यां तत्समुदायाच्च तदाधारमपरं द्रव्यमुपलभामहे, ग्रावभ्यो ग्रावसमुदायादिवच्च तदाधारमपरं पृथग्विधं शिखरं समूहो द्रव्यमित्युक्तम्। तत्र समूहमात्रं द्रव्यमिति भ्रमापनुत्तये समूहे विशेषो द्रव्यमिति निर्द्धारयितुं समूहप्रकारानाह, द्विष्ठो हि इति।—यस्मादेवं तस्मान्न समूहमात्रं द्रव्यमित्यर्थः। द्वाभ्यां प्रकाराभ्यां तिष्ठतीति द्विष्ठः। एकं प्रकारमाह, प्रत्यस्तमित इति।—प्रत्यस्तमितो भेदो येषामवयवानां ते तथोक्ताः प्रत्यस्तमितभेदा अवयवा यस्य स तथोक्तः। एतदुक्तं भवति—शरीर-वृक्ष-यूथ-वनशब्देभ्यः समूहः प्रतीयमानोऽप्रतीतावयवभेदस्तद्वाचकशब्दाप्रयोगात् समूह एकोऽवगम्यत इति। युतायुतसिद्धावयवत्वेन चेतनाचेतनत्वेन चोदाहरणचतुष्टयम्। युतायुतसिद्धावयवत्वं चाग्रे वक्ष्यते। द्वितीयं प्रकारमाह, शब्देनोपात्तभेदावयवानुगतः समूह उभये देवमनुष्या इति।—देवमनुष्या इति हि शब्देनोभयशब्दवाच्यस्य समूहस्य भागौ भिन्नावुपात्तौ। ननु उभयशब्दात्तदवयवभेदो न प्रतीयते, तत् कथमुपात्तभेदावयवानुगतः? इत्यत आह, ताभ्याम् इति।—ताभ्यां भागाभ्यामेव च समूहोऽभिधीयते, उभयशब्देन भागद्वयवाचिशब्दसहितेन

विवक्षितः, आम्राणां वनं ब्राह्मणानां सङ्घः, आम्रवनं ब्राह्मणसङ्घ इति, स पुनर्द्विविधो युतसिद्धावयवोऽयुतसिद्धावयवश्च. युतसिद्धावयवः समूहो वनं सङ्घ इति, अयुतसिद्धावयवः सङ्घातः शरीरं वृक्षः परमाणुरिति। अयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिति पतञ्जलिः, एतत् स्वरूपमित्युक्तम्। अथ किमेषां सूक्ष्मरूपम्? तन्मात्रं भूतकारणं, तस्यैकोऽवयवः परमाणुः सामान्य-विशेषात्माऽयुतसिद्धावयवभेदानुगतः समुदाय इति, एवं सर्वतन्मात्राणि, एतत्तृतीयम्। अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्य्यस्वभावानुपातिनोऽन्वयशब्देन उक्ताः। अथैषां पञ्चमं रूपमर्थवत्त्वं, भोगापवर्गार्थता गुणेषु

---

समूहो वाच्यः वाक्यस्य वाक्यार्थवाचकत्वादिति भावः। पुनर्द्वैविध्यमाह स च इति।—भेदेन चाभेदेन चःविवक्षितः। भेदविवक्षितमाह, आम्राणां वनं ब्राह्मणानां सङ्घ इति।—भेद एव षष्ठीश्रुतेर्यथा गर्गाणां गौरिति। अभेदविवक्षितमाह, आम्रवनं ब्राह्मणसङ्घ इति।—आम्राश्च ते वनञ्चेति, समूह-समूहिनोरभेदं विवक्षित्वा सामानाधिकरण्यमित्यर्थः। विधान्तरमाह, स पुनर्द्विविध इति।—युतसिद्धावयवः समूहः, युतसिद्धाः पृथक् सिद्धाः सान्तराला अवयवा यस्य स तथोक्तः, यूथं वनमिति सान्तराला हि तदवयवा गावश्च वृक्षाश्च। अयुतसिद्धावयवश्च समूहो वृक्षो गौः परमाणुरिति, निरन्तरा हि तदवयवाः सामान्यविशेषाः वा सास्नादयो वेति। तदेतेषु समूहेषु द्रव्यभूतं समूहं निर्द्धारयति—अयुतसिद्ध इति। तदेवं प्रासङ्गिकं द्रव्यं व्युत्पाद्य प्रकृतमुपसंहरति—एतत् स्वरूपमित्युक्तम् इति। तृतीयं रूपं विवक्षुः पृच्छति अथ इति। उत्तरमाह, तन्मात्रम् इति।—तस्यैकोऽवयव परिणामभेदः परमाणुः, सामान्यं मूर्त्तिः शब्दादयो विशेषाः तदात्मा, अयुतसिद्धा निरन्तरा येऽवयवाः सामान्य-विशेषाः तद्भेदेष्वनुगतः समुदायः, यथा च परमाणुः सूक्ष्मं रूपमेवं सर्वतन्मात्राणि सूक्ष्म रूपमिति। उपसंहरति—एतत् इति। अथ भूतानां चतुर्थं रूपं ख्यातिक्रियास्थितिशीला गुणाः कार्य्यस्वभावानुपातिनः कार्य्यस्वभावमनुपतितुमनुगन्तुं शीलं येषां ते तथोक्ताः, अत एवान्वयशब्देनोक्ताः। अथैषां पञ्चमं रूपमर्थवत्त्वं विवृणोति—भोग इति। नन्वेवमपि सन्तु गुणा अर्थवन्तः, तत्कार्य्याणान्तु

अन्वयिनी, गुणास्तन्मात्रभूतभौतिकेषु इति सर्वमर्थवत्। तेषु इदानीं भूतेषु पञ्चसु पञ्चरूपेषु संयमात्तस्य तस्य रूपस्य स्वरूपदर्शनं जयश्च प्रादुर्भवति, तत्र पञ्च भूतस्वरूपाणि जित्वा भूतजयी भवति. तज्जयात् वत्सानुसारिण्य इव गावोऽस्य सङ्कल्पानुविधायिन्यो भूतप्रकृतयो भवन्ति ॥ ४४ ॥

ततोऽणिमादिप्रादुर्भावः कायसम्पत्तद्धर्मानभिघातश्च ॥ ४५ ॥

तत्र अणिमा भवति अणुः, लघिमा लघुर्भवति, महिमा महान् भवति, प्राप्तिः अङ्गुल्यग्रेणापि स्पृशति चन्द्रमसं, प्राकाम्यम् इच्छाऽनभिघातः, भूमावुन्मज्जति निमज्जति च यथोदके, वशित्वं भूत-भौतिकेषु वशीभवति, अवश्यश्चान्येषाम्, ईशितृत्वं तेषां प्रभवाप्ययव्यूहानामीष्टे, यत्र कामावसायित्वं सत्यसङ्कल्पता,

---

कुतोऽर्थवत्त्वम्? इत्यत आह, गुणा इति।—भौतिका गो-घटादयः। तदेवं संयमविषयमुक्त्वा संयमं तत्फलञ्चाह—तेषु इति। भूतप्रकृतयः भूतस्वभावाः ॥४४॥

सङ्कल्पानुविधाने भूतानां किं योगिनः सिध्यति? इत्यत आह—ततोऽणिमादि…श्च इति सूत्रम्।

स्थूलसंयमजयाच्चतस्रः सिद्धयो भवन्तीत्याह, तत्र इति।—अणिमा महानपि भवत्यणुः, लघिमा महानपि लघुर्भूत्वेषीकातूल इवाकाशे विहरति, महिमा अल्पोऽपि नाग-नग-नगरपरिमाणो भवति, प्राप्तिः सर्वे भावाः सन्निहिता भवन्ति योगिनः, तद्यथा भूमिष्ठ एवाङ्गुल्यग्रेण स्पृशति चन्द्रमसम्। स्वरूपसंयमविजयात् सिद्धिमाह, प्राकाम्यमिच्छाऽनभिघात इति।—नास्य रूपं भूतस्वरूपैर्मूर्त्यादिभिरभिहन्यते भूमावुन्मज्जति निमज्जति च यथोदके। सूक्ष्मविषयसंयमजयात् सिद्धिमाह, वशित्वम् इति।—भूतानि पृथिव्यादीनि, भौतिकानि गो-घटादीनि, तेषु वशी स्वतन्त्रो भवति तेषान्त्ववश्यः, तत्कारण-तन्मात्र-पृथिव्यादिपरमाणुवशीकारात् तत्कार्य्यवशीकारः, तेन यानि यथा अवस्थापयति तानि तथा अवतिष्ठन्ते इत्यर्थः। अन्वयविषयसंयमजयात् सिद्धिमाह, ईशितृत्वम् इति।—तेषां भूत-भौतिकानां विजितमूलप्रकृतिः सन् यः प्रभव उत्पादो यश्चाप्ययो विनाशो यश्च व्यूहः यथावदवस्थापनं तेषामीष्टे। अर्थवत्त्वसंयमात् सिद्धिमाह, यत्र कामावसायित्वं

यथा सङ्कल्पस्तथा भूतप्रकृतीनामवस्थानं, न च शक्तोऽपि पदार्थ-विपर्य्यासं करोति, कस्मात्? अन्यस्य यत्र कामावसायिनः पूर्वसिद्धस्य तथा भूतेषु सङ्कल्पादिति, एतानि अष्टौ ऐश्वर्य्याणि। कायसम्पत् वक्ष्यमाणा। तद्धर्मानभिघातश्च पृथ्वी मूर्त्त्या न निरुणद्धि योगिनः शरीरादिक्रियां, शिलामप्यनुप्रविशतीति, नाऽऽपः स्निग्धाः क्लेदयन्ति, नाग्निरुष्णो दहति, न वायुः प्रणामी वहति, अनावरणात्मकेऽपि आकाशे भवति आवृतकायः, सिद्धानामपि अदृश्यो भवति ॥ ४५ ॥

**रूपलावण्यबलवज्रसंहननत्वानि कायसम्पत् ॥ ४६ ॥**

दर्शनीयः कान्तिमान् अतिशयबलो वज्रसंहननश्चेति ॥ ४६ ॥

**ग्रहणस्वरूपास्मितान्वयार्थवत्त्वसंयमादिन्द्रियजयः ॥ ४७ ॥**

सामान्य-विशेषात्मा शब्दादिर्ग्राह्यः, तेषु इन्द्रियाणां वृत्ति-

---

यथसङ्कल्पता इति।—विजितगुणार्थवत्त्वो हि योगी यद्यदर्थतया सङ्कल्पयति तत् तत् तस्मै प्रयोजनाय कल्पते, विषमप्यमृतकार्य्ये सङ्कल्प्य भोजयन् जीवयतीति। स्यादेतत् यथा शक्तिविपर्य्यासं करोति, एवं पदार्थविपर्य्यासमपि कस्मान्न करोति? यथा चन्द्रमसमादित्यं कुर्य्यात् कुहूं च सिनीवालीमित्यत आह, न च शक्तोऽपि इति।—न खल्वेते यत्र कामावसायिनस्तत्र भगवतः परमेश्वरस्याज्ञामुत्क्रमितुमुत्सहन्ते, शक्तयस्तु पदार्थानां जाति-देश कालावस्थाभेदेनानियतस्वभावा इति युज्यते तासु तदिच्छानुविधानमिति, एतानि अष्टौ ऐश्वर्य्याणि। तद्धर्मानभिघात इति।—अणिमादिप्रादुर्भाव इत्यनेनैव तद्धर्मानभिघातसिद्धौ पुनरुपादानं कायसिद्धिवत् एतत्सूत्रोपवद्धसकलविषयसंयमफलवत्त्वज्ञापनाय। सुगममन्यत् ॥ ४५ ॥

कायसम्पदमाह, रूप इत्यादि सूत्रम्।—वज्रस्येव संहननम् अवयवव्यूहो दृढो निविड़ो यस्य स तथा तस्य भावस्तत्त्वमिति ॥ ४६ ॥

जितभूतस्य योगिन इन्द्रियजयोपायमाह, ग्रहण इत्यादि सूत्रम्।—ग्रहणं च स्वरूपं च अस्मिता च अन्वयश्चार्थवत्त्वं च तेषु संयमस्तस्मादित्यर्थः।

ग्रहणं, न च तत् सामान्यमात्रग्रहणाकारं, कथमनालोचितः स विषयविशेष इन्द्रियेण मनसाऽनुव्यवसीयेत ? इति। स्वरूपं पुनः प्रकाशात्मनो बुद्धिसत्त्वस्य सामान्यविशेषयोरयुतसिद्धावयवभेदानुगतः समूहो द्रव्यमिन्द्रियम्। तेषां तृतीयं रूपमस्मितालक्षणोऽहङ्कारः, तस्य सामान्यस्येन्द्रियाणि विशेषाः। चतुर्थं रूपं व्यवसायात्मकाः प्रकाशक्रियास्थितिशीला गुणाः, येषामिन्द्रियाणि साहङ्काराणि परिणामः। पञ्चमं रूपं गुणेषु यदनुगतं पुरुषार्थवत्त्वमिति। पञ्चसु एतेषु इन्द्रियरूपेषु यथाक्रमं संयमः तत्र तत्र जयं कृत्वा पञ्चरूपजयादिन्द्रियजयः प्रादुर्भवति योगिनः ॥ ४७ ॥

**ततो मनोजवित्वं विकरणभावः प्रधानजयश्च ॥ ४८ ॥**

कायस्यानुत्तमो गतिलाभो मनोजवित्वं, विदेहानामिन्द्रिया-

---

गृह्णातीति ग्रहणं, तच्च ग्राह्याधीननिरूपणमिति ग्राह्यं दर्शयति—सामान्यविशेषात्मा इति। ग्राह्यमुक्त्वा ग्रहणमाह, तेषु इति।—वृत्तिः आलोचनं, विषयाकारा परिणतिरिति यावत्। ये त्वाहुः सामान्यमात्रगोचरेन्द्रियवृत्तिरिति तान् प्रत्याह, न च इति।—गृह्यत इति ग्रहणं, सामान्यमात्रगोचरं ग्रहणं, बाह्येन्द्रियतन्त्रं हि मनो बाह्ये प्रवर्त्तते, अन्यथा अन्धबधिराद्यभावप्रसङ्गात्, तदिह यदि न विशेषविषयमिन्द्रियं तेनासावनालोचितो विशेष इति कथं मनसाऽनुव्यवसीयेत ? तस्मात् सामान्यविशेषविषयमिन्द्रियालोचनमिति, तदेतत् ग्रहणमिन्द्रियाणां प्रथमं रूपम्। द्वितीयं रूपमाह, स्वरूपं पुनः इति।—अहङ्कारो हि सत्त्वभागेनाऽऽत्मीयेनेन्द्रियाण्यजीजनत्, अतो यत् तत्र करणत्वं सामान्यं, यच्च नियतरूपादिविषयत्वं विशेषः, तदुभयमपि प्रकाशात्मकमित्यर्थः। तेषां तृतीयं रूपम् इति।—अहङ्कारो हि इन्द्रियाणां कारणमिति यत्रेन्द्रियाणि तत्र तेन भवितव्यमिति सर्वेन्द्रियसाधारणत्वात् सामान्यमिन्द्रियाणामित्यर्थः। चतुर्थं रूपम् इति।—गुणानां हि द्वैरूप्यं—व्यवसायात्मकत्वं व्यवसेयात्मकत्वञ्च, तत्र व्यवसेयात्मकतां ग्राह्यतामास्थाय पञ्चतन्मात्राणि भूतभौतिकानि च निर्मिमते, व्यवसायात्मकत्वन्तु ग्रहणरूपमास्थाय साहङ्काराणि इन्द्रियाणीत्यर्थः। शेषं सुगमम् ॥४७॥

पञ्चरूपेन्द्रियजयात् सिद्धीराह—तत इत्यादि सूत्रम्।

णामभिप्रेतदेश-कालविषयापेक्षो वृत्तिलाभो विकरणभावः, सर्वप्रकृतिविकारवशित्वं प्रधानजय इति, एतास्तिस्रः सिद्धयो मधुप्रतीका उच्यन्ते, एताश्च करणपञ्चकरूपजयादधिगम्यन्ते ॥४८॥

**सत्त्व-पुरुषान्यताख्यातिमात्रस्य सर्वभावाधिष्ठातृत्वं सर्वज्ञातृत्वञ्च ॥ ४९ ॥**

निर्धूतरजस्तमोमलस्य बुद्धिसत्त्वस्य परे वैशारद्ये परस्यां वशीकारसंज्ञायां वर्त्तमानस्य सत्त्व-पुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वं, सर्वात्मानो गुणा व्यवसाय-व्यवसेयात्मकाः स्वामिनं क्षेत्रज्ञं प्रत्यशेषदृश्यात्मत्वेनोपतिष्ठन्त इत्यर्थः। सर्वज्ञातृत्वं सर्वात्मनां गुणानां शान्तोदिताव्यपदेश्यधर्मत्वेन व्यवस्थितानामक्रमोपारूढं विवेकजं ज्ञानमित्यर्थः, इत्येषा

---

विदेहानामिन्द्रियाणां करणभावो विकरणभावः। देशः काश्मीरादिः, कालः अतीतादिः, विषयः सूक्ष्मादिः। सान्वयेन्द्रियजयात् सर्वप्रकृतिविकारवशित्वं प्रधानजयः। ता एताः सिद्धयो मधुप्रतीका इत्युच्यन्ते योगशास्त्रनिपुणैः। स्यादेतत्, इन्द्रियजयात् इन्द्रियाणि सविषयाणि वश्यानि भवन्तु, प्रधानादीनां तत्कारणानां किमायातम् ? इत्यत आह एताश्च इति।—करणानाम् इन्द्रियाणां पञ्चरूपाणि ग्रहणादीनि तेषां जयात्; एतदुक्तं भवति—नेन्द्रियमात्रजयस्यैताः सिद्धयः, अपि तु पञ्चरूपस्य, तदन्तर्गतञ्च प्रधानादीति ॥ ४८ ॥

त एते ज्ञान-क्रियारूपैश्वर्य्यहेतवः संयमाः साक्षात् पारम्पर्य्येण च स्वसिद्धाः उपसंहार-सम्पादितश्रद्धाद्वारेण यदर्थास्तस्याः सत्त्व-पुरुषान्यताख्यातेरवान्तरविभूतीर्दर्शयति—सत्त्व इत्यादि सूत्रम्।

निर्धूतरजस्तमोमलतया वैशारद्यं, ततः परा वशीकारसंज्ञा। रजस्तमोभ्यामुपप्लुतं हि चित्तसत्त्वमवश्यमासीत्, तदुपशमे तु तद्वश्यं योगिनो वशिनः, तस्मिन् वश्ये योगिनः सत्त्व-पुरुषान्यताख्यातिमात्ररूपप्रतिष्ठस्य सर्वभावाधिष्ठातृत्वम्। एतदेव विवृणोति, सर्वात्मान इति।—व्यवसाय-व्यवसेयात्मानः जड़प्रकाशरूपा इत्यर्थः, तदनेन क्रियैश्वर्य्यमुक्तम्। ज्ञानैश्वर्य्यमाह—सर्वज्ञातृत्वम् इति। अस्या अपि द्विविधायाः सिद्धेर्वैराग्याय

विशोका नाम सिद्धिः, यां प्राप्य योगी सर्वज्ञः क्षीणक्लेशबन्धनो वशी विहरति ॥ ४९ ॥

**तद्वैराग्यादपि दोषवीजक्षये कैवल्यम् ॥५०॥**

यदा अस्यैवं भवति क्लेशकर्मक्षये सत्त्वस्य अयं विवेकप्रत्ययो धर्मः, सत्त्वञ्च हेयपक्षे न्यस्तं, पुरुषश्चापरिणामी शुद्धोऽन्यः सत्त्वादिति, एवम् अस्य ततो विरज्यमानस्य यानि क्लेशवीजानि दग्धशालिवीजकल्पान्यप्रसवसमर्थानि तानि सह मनसा प्रत्यस्तं गच्छन्ति, तेषु प्रलीनेषु पुरुषः पुनरिदं तापत्रयं न भुङ्क्ते, तदेतेषां गुणानां मनसि कर्मक्लेशविपाकस्वरूपेण अभिव्यक्तानां चरितार्थानां प्रतिप्रसवे पुरुषस्य आत्यन्तिको गुणवियोगः कैवल्यं, तदा स्वरूपप्रतिष्ठा चितिशक्तिरेव पुरुष इति ॥ ५० ॥

**स्थान्युपनिमन्त्रणे सङ्ग-स्मयाकरणं पुन-रनिष्टप्रसङ्गात् ॥ ५१ ॥**

चत्वारः खलु अमी योगिनः,—प्रथमकल्पिकः, मधुभूमिकः, प्रज्ञाज्योतिः, अतिक्रान्तभावनीयश्चेति। तत्राभ्यासी प्रवृत्तमात्र-

---

योगिजनप्रसिद्धां संज्ञामाह, एषा विशोका इति।—क्लेशाश्च बन्धनानि च कर्माणि तानि क्षीणानि यस्य स तथा ॥ ४९ ॥

संयमान्तराणां पुरुषार्थाभासफलत्वात् विवेकख्यातिसंयमस्य पुरुषार्थतां दर्शयितुं विवेकख्यातेः परवैराग्योपजननद्वारेण कैवल्यं फलमाह—तद्वैराग्यात् इत्यादि सूत्रम्।

यदा अस्य योगिनः क्लेशकर्मक्षये एवं ज्ञानं भवति; किम्भूतम्? इत्याह—सत्त्वस्यायं विवेकप्रत्ययो धर्म इति। शेषं तत्र तत्र व्याख्यातत्वात् सुगमम् ॥ ५० ॥

सम्प्रति कैवल्यसाधने प्रवृत्तस्य योगिनः प्रत्यूहसम्भवे तन्निराकरणकारण-मुपदिशति, स्थान्युप इत्यादि सूत्रम्।—स्थानानि येषां सन्ति ते स्थानिनो महेन्द्रादयः, तैरुपनिमन्त्रणे तस्मिन्, सङ्गश्च स्मयश्च न कर्त्तव्यः पुनरनिष्टप्रसङ्गात्।

तत्र यं देवाः स्थानैरुपनिमन्त्रयन्ते तं योगिनमेकं निर्द्धारयितुं यावन्तो योगिनः सम्भवन्ति तावत एवाह—चत्वार इति। तत्र प्रथमकल्पिकस्य स्वरूपमाह, तत्राभ्यासी

ज्योतिः प्रथमः । ऋतम्भरप्रज्ञो द्वितीयः । भूतेन्द्रियजयी तृतीयः, सर्वेषु भावितेषु भावनीयेषु कृतरक्षाबन्धः कृतकर्त्तव्यसाधनादिमान् । चतुर्थो यस्त्वतिक्रान्तभावनीयस्तस्य चित्तप्रतिसर्ग एकोऽर्थः, सप्तविधाऽस्य प्रान्तभूमिप्रज्ञा । तत्र मधुमतीं भूमिं साक्षात्कुर्वतो ब्राह्मणस्य स्थानिनो देवाः सत्त्वशुद्धिमनुपश्यन्तः स्थानैरुपनिमन्त्रयन्ते—भोः ! इह आस्यताम्, इह रम्यतां, कमनीयोऽयं भोगः, कमनीयेयं कन्या, रसायनमिदं जरामृत्युं बाधते, वैहायसमिद यानम्, अमी कल्पद्रुमाः, पुण्या मन्दाकिनी, सिद्धा महर्षयः, उत्तमा अनुकूला अप्सरसः, दिव्ये श्रोत्र-चक्षुषी, वज्रोपमः कायः, स्वगुणैः सर्वमिदमुपार्जितमायुष्मता, प्रतिपद्यतामिदमक्षयमजरममरस्थानं देवानां प्रियमिति । एवमभिधीयमानः सङ्गदोषान् भावयेत्, घोरेषु संसाराङ्गारेषु पच्यमानेन मया जननमरणान्धकारे विपरिवर्त्तमानेन कथञ्चिदासादितः क्लेशतिमिरविनाशी योगप्रदीपः, तस्य चैते तृष्णायोनयो विषयवायवः प्रतिपक्षाः, स खलु अहं लब्धालोकः कथमनया विषयमृगतृष्णया वञ्चितस्तस्यैव पुनः

---

इति ।—प्रवृत्तमात्रं न पुनर्वशीकृतं ज्योतिः ज्ञानं परचित्तादिविषयं यस्य स तथा । द्वितीयमाह, ऋतम्भरप्रज्ञ इति ।—यत्रेदमुक्तम् ऋतम्भरा तत्र प्रज्ञा इति, स हि भूतेन्द्रियाणि जिगीषुः । तृतीयमाह, भूतेन्द्रियजयी इति ।—तेन हि स्थूलादिसंयमेन ग्रहणादिसंयमेन च भूतेन्द्रियाणि जितानि । तमेवाह, सर्वेषु इति ।—सर्वेषु भावितेषु निष्पादितेषु भूतेन्द्रियजयात् परचित्तादिज्ञानादिषु कृतरक्षाबन्धः, यतस्तेभ्यो न च्यवते, भावनीयेषु निष्पादनीयेषु विशोकादिषु परवैराग्यपर्य्यन्तेषु कर्त्तव्यसाधनवान्, पुरुषप्रयत्नस्य साधनविषयस्यैव साध्यनिष्पादकत्वात् । चतुर्थमाह, चतुर्थ इति ।—तस्य हि भगवता जीवन्मुक्तस्य चरमदेहस्य चित्तप्रतिसर्ग एकोऽर्थः । तदेतेषु योगिषु उपनिमन्त्रणविषयं योगिनमवधारयति, तत्र मधुमतीम् इति ।—प्रथमकल्पिके तावन्म हेन्द्रादीनां तत्प्राप्तिशङ्कैव नास्ति, तृतीयोऽपि तैर्नोपनिमन्त्रणीयः भूतेन्द्रियवशित्वेनैव तत्प्राप्तेः, चतुर्थोऽपि परवैराग्यसम्पत्तेरासङ्गाशङ्का दूरोत्सारितैव, इति पारिशेष्यात् द्वितीय एव ऋतम्भरप्रज्ञ तदुपनिमन्त्रणविषय इति । वैहायसम् आकाशगामि । अक्षयम्

प्रदीप्तस्य संसाराग्नेरात्मानम् इन्धनीकुर्य्याम् ? इति। स्वस्ति वः स्वप्नोपमेभ्यः कृपणजनप्रार्थनीयेभ्यो विषयेभ्यः, इत्येवं निश्चितमतिः समाधिं भावयेत्। सङ्गमकृत्वा स्मयमपि न कुर्य्यात्—एवमहं देवानामपि प्रार्थनीय इति, स्मयादयं सुस्थितम्मन्यतया मृत्युना केशेषु गृहीतमिवात्मानं न भावयिष्यति, तथा च अस्य छिद्रान्तर-प्रेक्षी नित्यं यत्नोपचर्य्यः प्रमादो लब्धविवरः क्लेशानुत्तम्भयिष्यति, ततः पुनरनिष्टप्रसङ्गः, एवमस्य सङ्ग-स्मयावकुर्वतो भावितोऽर्थो दृढीभविष्यति, भावनीयश्चार्थोऽभिमुखीभविष्यतीति ॥ ५१ ॥

**क्षण-तत्क्रमयोः संयमाद्विवेकजं ज्ञानम् ॥५२॥**

यथाऽपकर्षपर्य्यन्तं द्रव्यं परमाणुरेवं परमापकर्षपर्य्यन्तः कालः क्षणः, यावता वा समयेन चलितः परमाणुः पूर्वदेशं जह्यादुत्तरदेशमुपसम्पद्येत स कालः क्षणः, तत्प्रवाहाविच्छेदस्तु क्रमः, क्षण-तत्क्रमयोर्नास्ति वस्तुसमाहार इति बुद्धिसमा-

---

अविनाशि। अजरं सदाऽभिनवम्। स्मयकरणे दोषमाह, स्मयादयम् इति।—स्मयात् सुस्थितम्मन्यो नानित्यतां भावयिष्यति न तस्यां प्रणिधास्यतीत्यर्थः। सुगममन्यत् ॥ ५१ ॥

उक्ता क्वचित् क्वचित् संयमात् सर्वज्ञता, सा च न निःशेषज्ञता, अपि तु प्रकारमात्र-विषया, यथा सर्वैर्व्यञ्जनैर्भुक्तमिति, अत्र हि यावन्तो व्यञ्जनप्रकारास्तैर्भुक्तमिति गम्यते न तु निःशेषैरिति, अस्ति च निःशेषवचनः सर्वशब्दः, यथा उपनीतमन्नं सर्वमशितं प्राश्निकेनेति, तत्र हि निःशेषमिति गम्यते, तदिह निःशेषज्ञकालक्षणस्य विवेकजज्ञानस्य साधनं संयममाह—क्षण इत्यादि सूत्रम्।

क्षणपदार्थं निदर्शनपूर्वकमाह, यथा इति।—लोष्टस्य हि प्रविभज्यमानस्य यस्मिन्नवयवेऽल्पत्वतारतम्यं व्यवतिष्ठते सोऽपकर्षपर्य्यन्तः परमाणुर्यथा तथाऽपकर्षपर्य्यन्तः कालः क्षणः, पूर्वापरभागविकलकालकलेति यावत्। तमेव क्षणं प्रकारान्तरेण दर्शयति, यावता वा इति।—परमाणुमात्रं देशमतिक्रामेदित्यर्थः। क्रमपदार्थमाह, तत्प्रवाह इति।—तत्पदेन क्षणः परामृश्यते। न चेदृशः क्रमो वास्तवः किन्तु काल्पनिकः; तत्र समाहाररूपस्यायुगपद्भाविषु वास्तवत्वेन विचारासहत्वात् इत्यादि,

हारो मुहूर्त्ताहोरात्रादयः, स खल्वयं कालो वस्तुशून्यो बुद्धिनिर्माणः शब्दज्ञानानुपाती लौकिकानां व्युत्थितदर्शनानां वस्तुस्वरूप इव अवभासते, क्षणस्तु वस्तुपतितः क्रमावलम्बी, क्रमश्च क्षणानन्तर्य्यात्मा, तं कालविदः काल इत्याचक्षते योगिनः। न च द्वौ क्षणौ सह भवतः, क्रमश्च न, द्वयोः सहभुवोरसम्भवात्, पूर्व्वस्मादुत्तरभाविनो यदानन्तर्य्यं क्षणस्य स क्रमः, तस्मात् वर्त्तमान एवैकः क्षणः, न पूर्व्वोत्तरक्षणाः सन्तीति, तस्मान्नास्ति तत्समाहारः। ये तु भूतभाविनः क्षणास्ते परिणामान्विता व्याख्येयाः, तेनैकेन क्षणेन कृत्स्नो लोकः परिणाममनुभवति, तत्क्षणोपारूढाः खलु अमी धर्म्माः, तयोः क्षण-तत्क्रमयोः संयमात् तयोः साक्षात्करणं, ततश्च विवेकज ज्ञानं प्रादुर्भवति ॥ ५२ ॥

तस्य विषयविशेष उपक्षिप्यते—

**जाति-लक्षण-देशैरन्यताऽनवच्छेदात्तुल्ययो-स्ततः प्रतिपत्तिः ॥ ५३ ॥**

तुल्ययोर्देशलक्षणसारूप्ये जातिभेदोऽन्यताया हेतुः, गौरियं

---

क्षण-तत्क्रमयोः इति।—अयुगपद्भाविक्षणधर्मत्वात् क्रमस्य क्षणसमाहारस्य अवास्तवत्वात् क्षण-तत्क्रमयोरप्यवास्तवत्वं समाहारस्य। नैसर्गिकवैतण्डिकबुद्ध्यतिशयरहिता लौकिकाः। प्रतिक्षणमेव व्युत्थितदर्शना भ्रान्ता ये कालमीदृशं वास्तवमभिमन्यन्त इति। तत् किं क्षणोऽपि अवास्तवः? नेत्याह, क्षणस्तु इति।—वस्तुपतितः वास्तव इत्यर्थः, क्रमस्यावलम्बनमवलम्बः सोऽस्यास्तीति, क्रमेण अवलम्ब्यते वैकल्पिकेनेत्यर्थः। क्रमस्य क्षणावलम्बनत्वे हेतुमाह—क्रमश्च इति। क्रमस्यावास्तवत्वे हेतुमाह न च इति।—चो हेत्वर्थे। यस्तु वैजात्यात् सहभावमुपेयात् त प्रत्याह—क्रमश्च न, द्वयोः इति। कस्मादसम्भव? इत्यत आह—पूर्व्वस्मात् इति। उपसंहरति—तस्मात् इति। तत् किमिदानीं शशविषाणायमाना एव पूर्व्वोत्तरक्षणाः? नेत्याह, ये तु इति।—अन्विताः सामान्येन समन्वागता इत्यर्थः। उपसंहरति, तेन इति।—वर्त्तमानस्यैवार्थक्रियासु स्वोचितासु सामर्थ्यादिति ॥ ५२ ॥

यद्यप्येतद्विवेकज ज्ञानं निःशेषभावविषयमित्यग्रे वक्ष्यते, तथाऽप्यतिसूक्ष्मत्वात् प्रथमं तस्य विषयविशेष उपक्षिप्यते—जाति इत्यादि सूत्रम्।

बड़वेयमिति। तुल्यदेशजातीयत्वे लक्षणमन्यत्वकरं, कालाक्षी गौः स्वस्तिमती गौरिति। द्वयोरामलकयोर्जातिलक्षणसारूप्यात् देशभेदोऽन्यत्वकर इदं पूर्वमिदमुत्तरमिति। यदा तु पूर्वमामलकमन्यव्यग्रस्य ज्ञातुरुत्तरदेश उपावर्त्त्यते तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति प्रविभागानुपपत्तिः, असन्दिग्धेन च तत्त्वज्ञानेन भवितव्यम्, इत्यत इदमुक्तं ततः प्रतिपत्तिः, विवेकजज्ञानात् इति। कथम्? पूर्वामलकसहक्षणो देश उत्तरामलकसहक्षणाद्देशाद्भिन्नः, ते चामलके स्वदेशक्षणानुभवभिन्ने, अन्यदेशक्षणानुभवस्तु तयोरन्यत्वे हेतुरिति। एतेन दृष्टान्तेन परमाणोस्तुल्य-

---

लौकिकानां जातिभेदोऽन्यताया ज्ञापकहेतुः, तुल्या जातिर्गोत्वं तुल्यश्च देशः पूर्वत्वादिः कालाक्षी-स्वस्तिमत्योर्लक्षणभेदः परमिति। द्वयोरामलकयोस्तुल्या आमलकत्वजातिः, वर्तुलत्वादिलक्षणं तुल्यं, देशभेदः परमिति। यदा तु योगिज्ञानं जिज्ञासुना केनचित् पूर्वामलकमन्यव्यग्रस्य योगिनो ज्ञातुरुत्तरदेश उपावर्त्त्यते उत्तरदेशमामलकं ततोऽपसार्य्य पिधाय वा तदा तुल्यदेशत्वे पूर्वमेतदुत्तरमेतदिति प्रविभागानुपपत्तिः प्राज्ञस्य लौकिकस्य विप्रमाणनिपुणस्य, असन्दिग्धेन च तत्त्वज्ञानेन भवितव्यं, विवेकजज्ञानवतो योगिनः सन्दिग्धत्वानुपपत्तेः, अत उक्तं सूत्रकृता—ततः प्रतिपत्तिः इति। तत इति व्याचष्टे—विवेकजज्ञानात् इति। क्षण-तत्क्रमसंयमाज्जातं ज्ञानं कथमामलकं तुल्यजातिलक्षणदेशादामलकान्तराद्विवेचयति? इति पृच्छति—कथम् इति। उत्तरमाह, पूर्वामलकसहक्षणो देशः पूर्वामलकेनैकक्षणो देशः, तेन सह निरन्तरपरिणाम इति यावत्, उत्तरामलकसहक्षणात् देशात् उत्तरामलकनिरन्तरपरिणामात् भिन्नः। भवतु देशयोर्भेदः किमायातमामलकभेदस्य? इत्यत आह, ते चामलके स्वदेशक्षणानुभवभिन्ने इति।—स्वदेशसहितो यः क्षणः तस्यामलकस्य कालकला स्वदेशेन सहौत्तराधर्य्यरूपपरिणामलक्षिता सा स्वदेशक्षणः, तस्यानुभवः प्राप्तिर्वा ज्ञानं वा, तेन भिन्ने आमलके। ययोरामलकयोः पूर्वोत्तराभ्यां देशाभ्यामौत्तराधर्य्यपरिणामक्षण आसीत्, तयोर्देशान्तरौत्तराधर्य्यपरिणामक्षणविशिष्टत्वमनुभवन् संयमी ते भिन्ने एव प्रत्येति. सम्प्रति तद्देशपरिणामेऽपि पूर्वं भिन्नदेशपरिणामाद्विशिष्टस्य चैतद्देशपरिणामक्षणस्य संयमेन साक्षात्करणात्, तदिदमुक्तम् अन्यदेशक्षणानुभवस्तु

जातिलक्षणदेशस्य पूर्वपरमाणुदेशसहक्षणसाक्षात्करणादुत्तरस्य परमाणोस्तद्देशानुपपत्तावुत्तरस्य तद्देशानुभवो भिन्नः सहक्षणभेदात्तयोरीश्वरस्य योगिनोऽन्यत्वप्रत्ययो भवतीति। अपरे तु वर्णयन्ति येऽन्त्या विशेषास्तेऽन्यताप्रत्ययं कुर्वन्तीति। तत्रापि देशलक्षणभेदो मूर्त्तिव्यवधिजातिभेदश्च अन्यत्वहेतुः, क्षणभेदस्तु योगिबुद्धिगम्य एवेति, अत उक्तं "मूर्त्तिव्यवधिजातिभेदाभावान्नास्ति मूलपृथक्त्वम्" इति वार्षगण्यः॥ ५३॥

**तारकं सर्वविषयं सर्वथा विषयमक्रमञ्चेति विवेकजं ज्ञानम्॥ ५४॥**

---

तयोरन्यत्वे हेतुः इति। अनेनैव निदर्शनेन लौकिकपरीक्षकसंवादादिना परमाणोरपीदृशस्य भेदो योगीश्वरबुद्धिगम्यः अद्धेय इत्याह—एतेन इति। अपरे तु वर्णयन्ति,वर्णनमुदाहरति, ये इति।—वैशेषिका हि नित्यद्रव्यवृत्तयोऽन्त्या विशेषा इत्याहुः, तथा हि योगिनो मुक्ता न तुल्यजातिदेशकालान् व्यवधिरहितान् परस्परतो भेदेन प्रत्येकं तत्त्वेन प्रतिपद्यन्ते, तस्मादस्ति कश्चिदन्त्यो विशेष इति, तथा च स एष नित्यानां परमाण्वादीनां द्रव्याणां भेदक इति। तदेतत् दूषयति तत्रापि इति।—जातिदेशलक्षणानि उदाहृतानि, मूर्त्तिः संस्थानं, यथैकं विशुद्धावयवसंस्थानोपपन्नमपसार्य तस्मिन्नेव देशेऽन्यस्य द्रष्टुः कुत्सितावयवसन्निवेश उपावर्त्त्यते, तथा तस्य संस्थानभेदेन भेदप्रत्ययः। शरीरं वा मूर्त्तिः, तत्तत्सम्बन्धेन आत्मनां संसारिणां मुक्तात्मनां वा भूतचरेण यादृश-तादृशेन भेदः इति सर्वत्र भेदप्रत्ययस्यान्यथासिद्धिर्नान्त्यविशेषकल्पना, व्यवधिर्भेदकारणं, यथा कुशपुष्करद्वीपयोर्देशव्यवधानं द्वयोरिति, यतो जाति-देशादिभेदा लोकबुद्धिगम्या अत उक्तं, क्षणभेदस्तु योगिबुद्धिगम्य एव इति।—एव-कारः क्षणभेदमवधारयति न योगिबुद्धिगम्यत्वं, तेन भूतचरेण देहसम्बन्धेन मुक्तात्मनामपि भेदो योगिबुद्धिगम्य उन्नेय इति, यस्य तु उक्ता भेदहेतवो न सन्ति तस्य प्रधानस्य प्रभेदो नास्तीत्याचार्य्यो मेने, यस्मादुक्तं कृतार्थं प्रति नष्टमप्यनष्टं तदन्यसाधारणत्वात् इति। तदाह मूर्त्तिव्यवधि इति।—उक्तभेदहेतूपलक्षणमेतत् जगन्मूलस्य प्रधानस्य पृथक्त्वं भेदो नास्तीत्यर्थः॥ ५३॥

तदेवं विषयैकदेशं विवेकजज्ञानस्य दर्शयित्वा विवेकजं ज्ञानं लक्षयति, तारकम् इत्यादि सूत्रम्।—विवेकजं ज्ञानमिति लक्ष्यनिर्देशः, शेषं लक्षणम्।

तारकमिति स्वप्रतिभोत्थमनौपदेशिकमित्यर्थः। सर्वविषयं न अस्य किञ्चिदविषयीभूतमित्यर्थः। सर्वथा विषयम् अतीतानागतप्रत्युत्पन्नं पर्य्यायैः सर्वथा जानातीत्यर्थः। अक्रममिति एकक्षणोपारूढं सर्वं सर्वथा गृह्णातीत्यर्थः। एतत् विवेकजं ज्ञानं परिपूर्णम्, अस्यैवांशो योगप्रदीपः, मधुमतीं भूमिमुपादाय यावदस्य परिसमाप्तिरिति ॥ ५४ ॥

प्राप्तविवेकजज्ञानस्य अप्राप्तविवेकजज्ञानस्य वा—

**सत्त्व-पुरुषयोः शुद्धिसाम्ये कैवल्यमिति ॥५५॥**

यदा निर्द्धूतरजस्तमोमलं बुद्धिसत्त्वं पुरुषस्यान्यताप्रत्ययमात्राधिकारं दग्धक्लेशबीजं भवति तदा पुरुषस्य शुद्धिसारूप्यमिवापन्नं भवति, तदा पुरुषस्योपचरितभोगाभावः शुद्धिः, एतस्यामवस्थायां कैवल्यं भवतीश्वरस्यानीश्वरस्य वा विवेकजज्ञानभागिन इतरस्य वा, न हि दग्धक्लेशबीजस्य ज्ञाने पुनरपेक्षा का-

---

संसारसागरात्तारयतीति तारकम्। पूर्वस्मात् प्रातिभाद्विशिषयति, सर्वथा विषयम् इति।—पर्य्यायाः अवान्तरविशेषाः, अत एव विवेकजं ज्ञानं परिपूर्णं नास्य क्वचित् किञ्चित् कथञ्चित् कदाचिदगोचर इत्यर्थः। आस्तां तावत् ज्ञानान्तरं, सम्प्रज्ञातोऽपि तावदस्यांशः, तस्मादतः परं किं परिपूर्णम्? इत्याह, अस्यैवांशो योगप्रदीप इति।—योगप्रदीपः सम्प्रज्ञातः। किमुपक्रमः? किमवसानश्चासौ? इत्याह, मधुमतीम् इति।—ऋतम्भरा प्रज्ञैव मधु,मोदकारणत्वात्, यथोक्तं प्रज्ञाप्रसादमारुह्य इति, तद्वती मधुमती तामुपादाय, यावदस्य परिसमाप्तिः सप्तधा प्रान्तभूमिः प्रज्ञा, अत एव विवेकजं ज्ञानं तारकं भवति तदंशस्य योगप्रदीपस्य तारकत्वादिति ॥ ५४ ॥

तदेवं परम्परया कैवल्यस्य हेतून् सविभूतीन् संयमानुक्त्वा सत्त्व-पुरुषान्यताज्ञानं साक्षात् कैवल्यसाधनमित्येव सूत्रमवतारयति, प्राप्त इति।—विवेकजं ज्ञानं भवतु मा वा भूत् सत्त्व पुरुषान्यताख्यातिस्तु कैवल्यप्रयोजिकेत्यर्थः।

सत्त्व इत्यादि सूत्रम्।—इति सूत्रसमाप्तौ।

ईश्वरस्य पूर्वोक्तैः संयमैर्ज्ञान-क्रियाशक्तिमतः, अनीश्वरस्य वा समनन्तरोक्तेन संयमेन विवेकजज्ञानभागिनः, इतरस्य वा अनुत्पन्नज्ञानस्य, न विभूतिषु काचिदपेक्षाऽस्तीत्याह

चिदस्ति, सत्त्वशुद्धिद्वारेणैतत् समाधिजमैश्वर्य्यञ्च ज्ञानञ्चोपक्रान्तम् । परमार्थतस्तु ज्ञानाददर्शनं निवर्त्तते, तस्मिन्निवृत्ते न सन्त्युत्तरे क्लेशाः, क्लेशाभावात् कर्मविपाकाभावः, चरिताधिकाराश्चैतस्यामवस्थायां गुणा न पुरुषस्य पुनर्दृश्यत्वेनोपतिष्ठन्ते, तत् पुरुषस्य कैवल्यं, तदा पुरुषः स्वरूपमात्रज्योतिरमलः केवली भवति ॥ ५५ ॥

इति पातञ्जलभाष्यप्रवचने विभूतिपादस्तृतीयः ॥ ३ ॥

---

—न हि इति । ननु यद्यनपेक्षिता विभूतयः कैवल्यं, व्यर्थस्तर्हि तासामुपदेशः ? इत्यत आह, सत्त्वशुद्धिद्वारेण इति ।—इत्थम्भूतलक्षणे तृतीया, नात्यन्तमहेतवः कैवल्ये विभूतय, किन्तु न साक्षादित्यर्थः । ज्ञानं विवेकजमुपक्रान्तं यच्च पारम्पर्य्येण कारणं तदौपचारिकं न मुख्यं, परमार्थतस्तु ख्यातिरेव मुख्येत्यर्थः । ज्ञानादिति प्रसङ्ख्यानादित्यर्थः ।

अवान्तराङ्गान्यङ्गानि परिणामाः प्रपञ्चिताः ।
संयमात् भूतिसंयोगस्तासु ज्ञानं विवेकजम् ॥

इति पदार्थसङ्ग्रहः श्लोकः ॥ ५५ ॥

इति श्रीमद्वाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां तत्त्ववैशारद्यां विभूतिपादस्तृतीयः समाप्तः ॥ ३ ॥



# कैवल्यपादः ।

## जन्मौषधि-मन्त्र-तपः-समाधिजाः सिद्धयः ॥१॥

देहान्तरिता जन्मना सिद्धिः । ओषधिभिः असुरभवनेषु रसायनेनेत्येवमादि । मन्त्रैः आकाशगमनाणिमादिलाभः । तपसा सङ्कल्पसिद्धिः, कामरूपी यत्र तत्र कामग इत्येवमादि । समाधिजाः सिद्धयो व्याख्याताः ॥ १ ॥

तत्र कायेन्द्रियाणामन्यजातीयपरिणतानाम्—

## जात्यन्तरपरिणामः प्रकृत्यापूरात् ॥ २ ॥

---

तदेवं प्रथम-द्वितीय-तृतीयपादैः समाधि-तत्साधन-तद्विभूतयः प्राधान्येन व्युत्पादिताः, इतरत्तु प्रासङ्गिकमोपोद्घातिकञ्चोक्तम् । इदानीं तद्धेतुकं कैवल्यं व्युत्पादनीयं न चैतत् कैवल्यभागीयं चित्तं परलोकञ्च पारलौकिकं विज्ञानातिरिक्तं चित्तकरणक-सुखाद्यात्मकशब्दाद्युपभोक्तारमात्मानञ्च प्रसङ्ख्यानपरमकाष्ठाञ्च विना व्युत्पाद्य शक्यं वक्तुम् इति तदेतत् सर्वमत्र पादे व्युत्पादनीयम्, इतरच्च प्रसङ्गादुपोद्घाताद्वा, तत्र प्रथमं सिद्धचित्तेषु कैवल्यभागीयं चित्तं निर्द्धारयितुकामः पञ्चतयीं सिद्धिमाह—जन्मौषधि-मन्त्र-तपः-समाधिजाः सिद्धयः इति सूत्रम् ।

व्याचष्टे, देहान्तरिता इति ।—स्वर्गोपभोगभागीयात् कर्मणो मनुष्यजातीयाचरितात् कुतश्चिन्निमित्ताल्लब्धपरिपाकात् क्वचित् देवनिकाये जातमात्रस्यैव दिव्यदेहान्तरिता सिद्धिरणिमाद्या भवतीति । ओषधिसिद्धिमाह, असुरभवनेषु इति ।—मनुष्यो हि कुतश्चिन्निमित्तादसुरभवनमुपसम्प्राप्तः कमनीयाभिरसुरकन्याभिरुपनीतं रसायनमुपयुज्य अजरामरत्वमन्याश्च सिद्धीरासादयति, इहैव वा रसायनोपयोगेन, यथा माण्डव्यो मुनिः रसोपयोगाद्विन्ध्यवासी इति । मन्त्रसिद्धिमाह—मन्त्रैरिति । तपःसिद्धिमाह—तपसा इति । सङ्कल्पसिद्धिमाह, कामरूपी इति ।—यदेव कामयतेऽणिमादि तदेकपदेऽस्य भवतीति, यत्र कामयते श्रोतुं वा मन्तुं वा तत्र तदेव शृणोति मनुते चेति, आदिशब्दात् दर्शनादयः सङ्गृहीता इति । समाधिजाः सिद्धयो व्याख्याताः अधस्तने पादे ॥ १ ॥

अथ चतसृषु सिद्धिषु औषधादिसाधनासु तेषामेव कायेन्द्रियाणां जात्यन्तरपरिणतिरिष्यते, सा पुनर्न तावदुपादानमात्रात्, न हि तावन्मात्रमुपादानं न्यूनाधिक-

पूर्वपरिणामापाय उत्तरपरिणामोपजनस्तेषामपूर्वावयवानुप्रवेशात् भवति, कायेन्द्रियप्रकृतयश्च स्वं स्वं विकारमनुगृह्णन्ति आपूरेण धर्मादिनिमित्तमपेक्षमाणा इति ॥ २ ॥

**निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवत् ॥ ३ ॥**

न हि धर्मादिनिमित्तं प्रयोजकं प्रकृतीनां भवति, न कार्य्येण कारणं प्रवर्त्यत इति, कथन्तर्हि ? वरणभेदस्तु ततः क्षेत्रिकवत् यथा क्षेत्रिकः केदारादपां पूरणात् केदारान्तरं पिप्लावयिषुः समं निम्नं निम्नतरं वा नाऽऽपः पाणिना अपकर्षति आवरणन्तु आसां

---

दित्यादित्यभावेऽस्य भवति, नो खल्वविलक्षणं कारणं कार्य्यवैलक्षण्याय अलं, माऽस्याकस्मिकत्वं भूदित्याशङ्क्य पूरयित्वा सूत्रं पठति, तत्र कायेन्द्रियाणामन्यजातीयपरिणतानां जात्यन्तरपरिणामः प्रकृत्यापूरादिति सूत्रम् ।—मनुष्यजातिपरिणतानां कायेन्द्रियाणां यो देव-तिर्यग्जातिपरिणामः स खलु प्रकृत्यापूरात्, कायस्य हि प्रकृतिः पृथिव्यादीनि भूतानि, इन्द्रियाणाञ्च प्रकृतिरस्मिता, तदवयवानुप्रवेश आपूरः, तस्मात् भवति ।

तदिदमाह —पूर्वपरिणाम इति। ननु यदि आपूरेणानुग्रहः, कस्मात् पुनरसौ न सदातनः ? इत्यत आह, धर्मादि इति।—तदनेन तस्यैव शरीरस्य बाल्य-कौमार-यौवन-वार्द्धकादीनि च, न्यग्रोधधानाया न्यग्रोधतरुभावश्च, वह्निकणिकायास्तृणराशिनिवेशिताया: प्रौढज्वालासहस्रतमालिङ्गितगगनमण्डलत्वञ्च व्याख्यातम् ॥ २ ॥

प्रकृत्यापूरादित्युक्तं, तत्रेदं सन्दिह्यते, किमापूरः प्रकृतीनां स्वाभाविकः, धर्मादिनिमित्तो वा ? इति, किं प्राप्तम् ? सतीष्वपि प्रकृतिषु कदाचिदापूरात् धर्मादिनिमित्तश्रवणाच्च तन्निमित्त एवेति प्राप्तम्। एवं प्राप्त आह, निमित्तमप्रयोजकं प्रकृतीनां वरणभेदस्तु ततः क्षेत्रिकवदिति सूत्रम्।—सत्यं धर्मादयो निमित्तं, न तु प्रयोजकाः, तेषामपि प्रकृतिकार्य्यत्वात् न च कार्य्यं कारणं प्रयोजयति, तस्य तदधीनोत्पत्तितया कारणपरतन्त्रत्वात्, स्वतन्त्रस्य च प्रयोजकत्वात्, न खलु कुलालमन्तरेण मृद्-दण्ड-चक्र-सलिलादय उत्पित्सितेनोत्पन्नेन वा घटेन प्रयुज्यन्ते, किन्तु स्वतन्त्रेण कुलालेन, न

भिनत्ति, तस्मिन् भिन्ने स्वयमेव आपः केदारान्तरमाप्लावयन्ति, तथा धर्मः प्रकृतीनामावरणमधर्मं भिनत्ति, तस्मिन् भिन्ने स्वयमेव प्रकृतयः स्वं स्वं विकारमाप्लावयन्ति। यथा वा स एव क्षैत्रिकः तस्मिन्नेव केदारे न प्रभवति औदकान् भौमान् वा रसान् धान्यमूलानि अनुप्रवेशयितं, किन्तर्हि? मुद्ग-गवेधुक-श्यामाकादीन् ततोऽपकर्षति, अपकृष्टेषु तेषु स्वयमेव रसा धान्यमूलानि अनुप्रविशन्ति, तथा धर्मो निवृत्तिमात्रे कारणमधर्मस्य, शुद्ध्यशुद्ध्योरत्यन्तविरोधात्, न तु प्रकृतिप्रवृत्तौ धर्मो हेतुर्भवतीति। अत्र नन्दीश्वरादय उदाहार्य्याः, विपर्य्ययेणाप्यधर्मो धर्मं बाधते, ततश्चाशुद्धिपरिणाम इति, तत्रापि नहुषाजगरादय उदाहार्य्याः ॥ ३ ॥

यदा तु योगी बहून् कायान् निर्मिमीते तदा किमेकमनस्कास्ते भवन्ति? अथ अनेकमनस्काः? इति,—

## निर्माणचित्तान्यस्मितामात्रात् ॥ ४ ॥

---

च पुरुषार्थोऽपि प्रवर्त्तकः, किन्तु तदुद्देशेनेश्वरः, उद्देशतामात्रेण पुरुषार्थः प्रवर्त्तक इत्युच्यते, उत्पित्सोस्तस्य पुरुषार्थस्य अव्यक्तस्य स्थितिकारणत्वं युक्तं, न चैतावता धर्मादीनामनिमित्तता, प्रतिबन्धापनयनमात्रेण क्षैत्रिकवदुपपत्तेः, ईश्वरस्यापि धर्माधिष्ठानार्थं प्रतिबन्धापनय एव व्यापारो वेदितव्यः। तदेतत् निगदव्याख्यातेन भाष्येण उक्तम् ॥ ३ ॥

प्रकृत्यापूरेण सिद्धेः समर्थ्य सिद्धिविनिर्मित-नानाकायवर्त्तिचित्तैकत्व-नानात्वे विचारयति—यदा तु इति।

तत्र नानामनस्त्वे कायानां प्रतिचित्तमभिप्रायभेदात् एकाभिप्रायानुरोधश्च परस्परं प्रतिसन्धानञ्च न स्यातां पुरुषान्तरवत्, तस्मादेकमेव चित्तं प्रदीपवद्विसारितया बहूनपि निर्माणकायान् व्याप्नोतीति प्राप्त आह—निर्माणचित्तान्यस्मितामात्रादिति सूत्रम्।

अस्मितामात्रं चित्तकारणमुपादाय निर्माणचित्तानि करोति, ततः सचित्तानि भवन्ति ॥ ४ ॥

**प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ॥५॥**

बहूनां चित्तानां कथमेकचित्ताभिप्रायपुरःसरा प्रवृत्तिः ? इति सर्वचित्तानां प्रयोजकं चित्तमेकं निर्मिमीते, ततः प्रवृत्तिभेदः ॥५॥

**तत्र ध्यानजमनाशयम् ॥ ६ ॥**

पञ्चविधं निर्माणचित्तं—जन्मौषधि-मन्त्र-तपः-समाधिजाः सिद्धय इति, तत्र यदेव ध्यानजं चित्तं तदेव अनाशयं, तस्यैव नास्ति आशयो रागादिप्रवृत्तिः, नातः पुण्यपापाभिसम्बन्धः,

---

यत् यावज्जीवच्छरीरं तत् सर्वमेकैकासाधारणचित्तान्वितं दृष्टं, तद्यथा चैत्रमैत्रादिशरीरं, तथा च निर्माणकायाः इति सिद्धं तेषामपि प्रातिस्विकं मनः, इत्यभिप्रायेण आह—अस्मितामात्रम् इति ॥ ४ ॥

यदुक्तमनेकचित्तत्व एकाभिप्रायानुरोधश्च प्रतिसन्धानञ्च न स्यातामिति, तत्रोत्तरं सूत्रं—प्रवृत्तिभेदे प्रयोजकं चित्तमेकमनेकेषाम् ।

अभविष्यदेष दोषो यदि चित्तमेकं नानाकायवर्त्ति मनोनायकं न निरमास्यत, तन्निर्माणे तु अदोषः । न चैकं गृहीत्वा कृतं प्रातिस्विकैर्मनोभिः, कृतं वा नायकनिर्माणेन, निजस्यैव मनसो नायकत्वादिति वाच्यं, प्रमाणसिद्धस्य नियोगपर्य्यनुयोगानुपपत्तेरिति । अत्र पुराणं भवति "एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः । भूत्वा यस्मात्तु बहुधा भवत्येकः पुनस्ततः ॥ तस्माच्च मनसो भेदा जायन्ते चैत एव हि । एकधा स द्विधा चैव त्रिधा च बहुधा पुनः ॥ योगीश्वरः शरीराणि करोति विकरोति च । प्राप्नुयात् विषयान् कैश्चित् कैश्चिदुग्रं तपश्चरेत् ॥ संहरेच्च पुनस्तानि सूर्य्यो रश्मिगणानिव ॥" इति । तदेतेन अभिप्रायेण आह—बहूनां चित्तानाम् इति ॥ ५ ॥

तदेवमुदितेषु पञ्चसु सिद्धचित्तेषु अपवर्गभागीयं चित्तं निर्द्धारयति—तत्र ध्यानजमनाशयमिति सूत्रम् ।

आशेरत इति आशयाः कर्मवासनाः क्लेशवासनाश्च, त एते न विद्यन्ते यस्मिन् तदनाशयं चित्तमपवर्गभागीयं भवति इत्यर्थः । यतो रागादिनिबन्धना प्रवृत्तिर्नास्ति, अतो नास्ति पुण्यपापाभिसम्बन्धः । कस्मात् पुनः रागादिजनिता प्रवृत्तिर्नास्ति ? इत्यत आह—

क्षीणक्लेशत्वात् योगिन इति। इतरेषान्तु विद्यते कर्माशयः ॥ ६ ॥

यतः—

**कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषाम् ॥ ७ ॥**

चतुष्पात् खलु इयं कर्मजातिः,—कृष्णा, शुक्लकृष्णा, शुक्ला, अशुक्लाऽकृष्णा चेति ; तत्र कृष्णा दुरात्मनां, शुक्लकृष्णा वहिः-साधनसाध्या, तत्र परपीड़ाऽनुग्रहद्वारेण कर्माशयप्रचयः, शुक्ला तपः-स्वाध्याय-ध्यानवतां, सा हि केवले मनसि आयतत्वादवहिः-साधनाधीनानपरान् पीड़यित्वा भवति, अशुक्लाऽकृष्णा संन्यासिनां क्षीणक्लेशानां चरमदेहानामिति। तत्राशुक्लं योगिन एव फल-संन्यासात्, अकृष्णञ्चानुपादानात्। इतरेषान्तु भूतानां पूर्वमेव त्रिविधमिति ॥ ७ ॥

---

क्षीणक्लेशत्वात् इति। ध्यानजस्यानाशयस्य मनोऽन्तरेभ्यो विशेषं दर्शयितुमितरेषामाशय-वत्तामाह—इतरेषान्तु इति ॥ ६ ॥

तत्रैव च हेतुपरं सूत्रमवतारयति—यत इति।

कर्माशुक्लाकृष्णं योगिनस्त्रिविधमितरेषामिति सूत्रम्।

पदं स्थानं, चतुर्षु समवेता चतुष्पदा, यत् यावत् वहिःसाधनसाध्यं तत्र सर्व-त्रास्ति कस्यचित् पीड़ा, न हि व्रीह्यादिसाधनेऽपि कर्मणि परपीड़ा नास्ति, अवघातादि-समये पिपीलिकादिवधसम्भवात्, अन्ततो वीजादिवधेन स्तम्बादिभेदोत्पत्तिप्रतिबन्धात्, अनुग्रहस्य दक्षिणादिना ब्राह्मणादेरिति। शुक्ला तपः-स्वाध्याय-ध्यानवतामसंन्यासिनाम्। शुक्लत्वमुपपादयति—सा हि इति। अशुक्लाऽकृष्णा संन्यासिनाम्। संन्यासिनो दर्शयति, क्षीण इति।—कर्मसंन्यासिनो हि न क्वचित् वहिःसाधनसाध्ये कर्माणि प्रवृत्ता इति न चैषामस्ति कृष्णः कर्माशयः, योगानुष्ठानसाध्यस्य कर्माशयफलस्येश्वरे समर्पणान्न शुक्लः कर्माशयः, निरत्ययफलो हि शुक्ल उच्यते, यस्य फलमेव नास्ति कुतस्तस्य निरत्ययफलम्? इत्यर्थः। तदेवं चतुष्टयीं कर्मजातिमुक्त्वा कतमा कस्य? इत्यवधारयति—तत्राशुक्लम् इति ॥ ७ ॥

**ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानाम् ॥ ८ ॥**

तत इति त्रिविधात् कर्मणः, तद्विपाकानुगुणानामेवेति यज्जातीयस्य कर्मणो यो विपाकस्तस्यानुगुणा या वासनाः कर्मविपाकमनुशेरते तासामेवाभिव्यक्तिः, न हि दैवं कर्म विपच्यमानं नारक-तिर्य्यङ्मनुष्यवासनाभिव्यक्तिनिमित्तं भवति, किन्तु दैवानुगुणा एव अस्य वासना व्यज्यन्ते, नारक-तिर्य्यङ्मनुष्येषु चैवं समानश्चर्चः ॥ ८ ॥

**जाति-देश-कालव्यवहितानामपि आनन्तर्य्यं स्मृति-संस्कारयोरेकरूपत्वात् ॥ ९ ॥**

वृषदंशविपाकोदयः स्वव्यञ्जकाञ्जनाभिव्यक्तः, स यदि जातिशतेन वा दूरदेशतया वा कल्पशतेन वा व्यवहितः पुनश्च स्वव्यञ्जकाञ्जन एव उदियात् द्रागित्येव पूर्वानुभूतवृषदंशविपाकाभि-

---

कर्माशयं विविच्य क्लेशाशयगतिमाह—ततस्तद्विपाकानुगुणानामेवाभिव्यक्तिर्वासनानामिति सूत्रम् ।

यज्जातीयस्य पुण्यजातीयस्य अपुण्यजातीयस्य वा. कर्मणो यो विपाकः दिव्यो वा नारको वा जात्यायुर्भोगः, तस्य विपाकस्यानुगुणाः। ता एवाह, या वासना कर्मविपाकमनुशेरते इति।—अनुशेरते अनुकुर्वन्ति। दिव्यभोगजनिता हि दिव्यकर्मविपाकानुगुणा वासनाः, न हि मनुष्यभोगवासनाभिव्यक्तौ दिव्यकर्मफलोपभोगसम्भवः, तस्मात् स्वविपाकानुगुणा एव वासनाः कर्माभिव्यञ्जनीया इति भाष्यार्थः ॥ ८ ॥

स्यादेतत्, मनुष्यस्य प्रायणानन्तरमधिगतमार्जारभावस्यानन्तरतया मनुष्यवासनाया एवाभिव्यक्त्या भवितव्यं, न खलु अस्ति सम्भवो यदनन्तरदिवसानुभूतं न स्मर्य्यते, व्यवहितदिवसानुभूतञ्च स्मर्य्यत इत्यत आह—जाति-देश-कालव्यवहितानामप्यानन्तर्य्यं स्मृतिसंस्कारयोरेकरूपत्वादिति सूत्रम् ।

भवतु वृषदंशवासनाया जात्यादिव्यवहितायाऽपि तस्याः फलत आनन्तर्य्यं, वृषदंशविपाकेन कर्मणा तस्या एव स्वविपाकानुगुणाया अभिव्यक्तौ तत्स्मरणसमुत्पादात् इत्याह, वृषदंशविपाकोदय इति।—उदेत्यस्मादित्युदयः कर्माशयः,

संस्कृता वासना उपादाय व्यज्येत, कस्मात्? यतो व्यवहितानामपि आसां सदृशं कर्माभिव्यञ्जकं निमित्तीभूतमिति आनन्तर्य्यमेव, कुतश्च? स्मृति-संस्कारयोः एकरूपत्वात्, यथाऽनुभवास्तथा संस्काराः, ते च कर्मवासनानुरूपाः, यथा च वासनाः तथा स्मृतिः, इति जाति-देश-कालव्यवहितेभ्यः संस्कारेभ्यः स्मृतिः, स्मृतेश्च पुनः संस्काराः, इत्येते स्मृतिसंस्काराः कर्माशयवृत्तिलाभवशात् व्यज्यन्ते, अतश्च व्यवहितानामपि निमित्त-नैमित्तिकभावानुच्छेदादानन्तर्य्यमेव सिद्धमिति ॥ ९ ॥

**तासामनादित्वञ्च आशिषो नित्यत्वात् ॥१०॥**

तासां वासनानामाशिषो नित्यत्वादनादित्वं, येयमात्माऽऽशीर्मा न भूवं भूयासमिति सर्वस्य दृश्यते सा न स्वाभाविकी,

---

पुनश्च स्वव्यञ्जकाञ्जन एवोदियात् अभिव्यज्येत विपाकारम्भाभिमुखः क्रियेतेत्यर्थः। अभिसंस्कारः क्रिया, उपादाय गृहीत्वा व्यज्येत यदि व्यज्येत, स्वविपाकानुगुणा एव वासना गृहीत्वा व्यज्येतेत्यर्थः, आनन्तर्य्यमेव फलतः कारणद्वारकमुपपाद्य कार्य्यद्वारकमुपपादयति, कुतश्च स्मृति इति।—एकरूपतया सादृश्यम्। तदेवाह—यथा इति। नतु अनुभवस्वरूपाश्चेत् संस्कारास्तथा सत्यनुभवा विनश्वराः इत्येतेऽपि विनश्वराः कथं चिरभाविनेऽनुभवाय कल्पेरन्? इत्यत आह, ते च कर्मवासनानुरूपा इति।—यथा अपूर्वं स्थायि क्षणिककर्मनिमित्तमपि एवं क्षणिकानुभवनिमित्तोऽपि संस्कारः स्थायी, किञ्चिद्भेदाधिष्ठानञ्च सारूप्यम्, अन्यथा अभेदे तत्त्वेन सादृश्यानुपपत्तेरित्यर्थः। सुगममन्यत् ॥ ९ ॥

स्यादेतत्, व्यज्येरन् पूर्व-पूर्वतरजन्माभिसंस्कृता वासना यदि पूर्व-पूर्वतरजन्मसद्भावे प्रमाणं स्यात्, तदेव तु नास्ति, न च जातमात्रस्य जन्तोर्हर्ष-शोकदर्शनमात्रं प्रमाणं भवितुमर्हति, पद्मादिसङ्कोच-विकाशवत् स्वाभाविकत्वेन तदुपपत्तेः? इत्यत आह, तासामनादित्वं चाशिषो नित्यत्वादिति सूत्रम्।—तासां वासनानामनादित्वञ्च न केवलमानन्तर्य्यमिति चार्थः, आशिषो नित्यत्वात् आत्माशिषो वासनानामनादित्वेन नित्यत्वाव्यभिचारादिति।

ननु स्वाभाविकत्वेनाप्युपपत्तेरसिद्धमाशिषो नित्यत्वम्? इत्यत आह—येयम् इति।



कस्मात्? जातमात्रस्य जन्तोरननुभूतमरणधर्मकस्य द्वेषदुःखानुस्मृतिनिमित्तो मरणत्रासः कथं भवेत्? न च स्वाभाविकं वस्तु निमित्तमुपादत्ते, तस्मादनादिवासनाऽनुविद्धमिदं चित्तं निमित्तवशात् काश्चिदेव वासनाः प्रतिलभ्य पुरुषस्य भोगाय उपावर्त्तत इति। घट-प्रासाद-प्रदीपकल्पं सङ्कोच-विकाशि चित्तं

---

नास्तिकः पृच्छति—कस्मात् इति। उत्तरं, जातमात्रस्य जन्तोः इति।—अत एवैतस्मिन् जन्मनि अननुभूतमरणधर्मकस्य मरणमेव धर्मः सोऽननुभूतो येन स तथोक्तः तस्य, मातुरङ्गात् प्रस्खलतः कम्पमानस्य माङ्गल्यचक्रादिलाञ्छितं तदुरःसूत्रमतिगाढं पाणिग्राहमवलम्बमानस्य बालकस्य कम्पभेदानुमिता द्वेषानुषक्ते दुःखे या स्मृतिस्तन्निमित्तो मरणत्रासः कथं भवेत्? इति। ननूक्तं स्वभावादित्यत आह, न च इति।—न च स्वाभाविकं वस्तु निमित्तमुपादत्ते गृह्णाति स्वोत्पत्तौ। एतदुक्तं भवति—बालकस्येदृशो दृश्यमानः कम्पो भयनिबन्धनः ईदृशकम्पत्वात् अस्मदादिकम्पवत्, बालकस्य भयं द्वेषदुःखस्मृतिनिमित्तं भयत्वादस्मदादिभयवत्, आगामिप्रत्यवायोत्प्रेक्षालक्षणञ्च भयं न दुःखस्मृतिमात्रात् भवति, अपि तु यतो बिभेति तस्य प्रत्यवायहेतुभावमनुमाय सम्प्रत्यपि प्रत्यवायभयं विदध्यादिति शङ्कते, तस्मात् यज्जातीयादनुभूतचरात् द्वेषानुषक्तं दुःखमुपपादितं तस्य स्मरणात्तज्जातीयस्य अनुभूयमानस्य तद्दुःखहेतुत्वमनुमाय ततो बिभेति, न च बालकेन अस्मिन् जन्मनि स्खलनस्यान्यच्च दुःखहेतुत्वमवगतं, न च तादृशं दुःखमुपलब्धं; तस्मात् प्राग्भवीयोऽनुभवः परिशिष्यते, तच्चैतदेवं प्रयोगमारोहति जातमात्रस्य बालकस्य स्मृतिः पूर्वानुभवनिबन्धना, स्मृतित्वादस्मदादिस्मृतिवदिति, न च पद्मसङ्कोच-विकाशावपि स्वाभाविकौ, न हि स्वाभाविकं कारणान्तरमपेक्षते, वह्नेरौष्ण्यं प्रत्यपि कारणान्तरापेक्षाप्रसङ्गात्, तस्मादागन्तुकमरुणकरसम्पर्कमात्रमेव कमलिनीविकाशकारणं, सङ्कोचकारणञ्च संस्कारः स्थितिस्थापक इति। एवं स्मितायनुमितहर्षादयोऽपि प्राचि भवे हेतवो वेदितव्याः। तदास्तां तावत्, प्रकृतमुपसंहरति, तस्मात् इति।—निमित्तं लब्धविपाककालं कर्म। प्रतिलम्भः अभिव्यक्तिः। प्रसङ्गतश्चित्तपरिमाणविप्रतिपत्तिं निराचिकीर्षुर्विप्रतिपत्तिमाह, घट-प्रासाद इति।—देहप्रदेशवर्त्तिकार्य्यदर्शनात् देहाद्बहिःसद्भावे चित्तस्य न प्रमाणमस्ति, न चैतदणुपरिमाणं, दीर्घशष्कुलीभक्षणादावपर्य्यायेण ज्ञानपञ्चकानुत्पादप्रसङ्गात्, न चाननुभूयमानक्रमकल्पनायां प्रमाणमस्ति, न चैकमणु मनो नानादेशैरिन्द्रियैरपर्य्यायेण सम्बद्धुमर्हति, तत् पारिशेष्यात् कायपरिमाणं चित्तं, घट-प्रासाद-

शरीरपरिमाणाकारमात्रमित्यपरे प्रतिपन्नाः, तथा चान्तराभावः, संसारश्च युक्त इति । वृत्तिरेवास्य विभुनः सङ्कोच-विकाशिनीत्याचार्य्यः । तच्च धर्मादिनिमित्तापेक्षं, निमित्तञ्च द्विविधं—बाह्य-

---

वर्त्तिप्रदीपवत् सङ्कोच-विकाशौ पुत्तिका-हस्तिदेहयोरस्योत्पत्स्येते, शरीरपरिमाणमेवाकारः परिमाणं यस्येत्यपरे प्रतिपन्नाः । नन्वेवं कथमस्य चेत्रबीजसंयोगः ? न खलु एतदनाश्रयं मृतशरीरान्मातृपितृदेहवर्त्तिनौ लोहित-रेतसौ प्राप्नोति, परतन्त्रत्वात्, न हि स्थाण्वादिषु अगच्छत्सु तच्छाया गच्छति, न चागच्छति पटे तदाश्रयं चित्रं गच्छति, तथा च न संसारः स्यादित्यत आह, तथा चान्तराभावः संसारश्च युक्त इति ।—तथा च शरीरपरिमाणत्वे, देहान्तरप्राप्तये पूर्वदेहत्यागश्च देहान्तरप्राप्तिश्चान्तराऽस्याऽऽतिवाहिकशरीरसंयोगात् भवतः, तेन खलु अयं देहान्तरे सञ्चरेत्, तथा च पुराणम्—"अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात्" इति, सोऽयमन्तराभावः. अत एव संसारश्च युक्त इति । तदेतद्-दूष्यमाणः स्वमतमाह, वृत्तिः इति ।—वृत्तिरेवास्य विभुनश्चित्तस्य सङ्कोच-विकाशिनीत्याचार्य्यः स्वयम्भूः प्रतिपेदे । इदमत्र आकूतं—यद्यनाश्रयं चित्तं न देहान्तरसञ्चारि, कथमेतदातिवाहिकमाश्रयते ? तत्रापि देहान्तरकल्पनायामनवस्था, न चास्य देहान्निष्कर्षं आतिवाहिकस्य सम्भवति, निष्कृष्टस्य चेतसस्तत्सम्बन्धात्, अस्तु तर्हि सूक्ष्मशरीरमेव आ सर्गात् आ च महाप्रलयान्नियतं चित्तानामधिष्ठानं षाट्कौशिकशरीरमध्यवर्त्ति, तेन हि चित्तमा सत्यलोकादा चावीचेस्तत्र तत्र शरीरे सञ्चरति, निष्कर्षश्चास्योपपन्नः षाट्कौशिककायात्, तत्र हि तदन्तराभावस्तस्य नियतत्वात्, न चास्यापि सद्भावे प्रमाणमस्ति, न खलु एतदध्यक्षगोचरः, न च संसारोऽस्यानुमानम्, आचार्य्यमतेनाप्युपपत्तेः, आगमस्तु पुरुषस्य निष्कर्षमाह, न च चित्तं वा सूक्ष्मशरीरं वा पुरुषः, किन्तु चितिशक्तिरप्रतिसङ्क्रमा, न चास्या निष्कर्षः सम्भवति, इत्यौपचारिको व्याख्येयः, तथा च चितिश्चित्तस्य च तत्र तत्र वृत्त्यभाव एव निष्कर्षार्थः, यच्च स्मृतीतिहासपुराणेषु मरणानन्तरं प्रेतशरीरप्राप्तिः तद्विमोकश्च सपिण्डीकरणादिभिः इत्युक्तं, तदनुजानीमः, आतिवाहिकत्वं तस्य न मृष्यामहे, न चात्रास्ति कश्चिदागमः, लब्धशरीर एव च यमपुरुषैरपि पाशबद्धो नीयेत न तु आतिवाहिकशरीरः, तस्मादाहङ्कारिकत्वाच्चेतसोऽहङ्कारस्य गगनमण्डलवत् त्रैलोक्यव्यापित्वाद्विभुत्वं मनसः, एवं चेदस्य वृत्तिरपि विभ्वीति सर्वज्ञताऽऽपत्तिरित्यत उक्तं वृत्तिरेवास्य इति । स्यादेतत्, चित्तमात्राधीनाया वृत्तेः सङ्कोच विकाशौ कुतः कादाचित्कौ ? इत्यत आह, तच्च इति ।—तच्च चित्तं धर्माद्यपेक्ष वृत्तौ । निमित्तं विभजते—निमित्तञ्च

माध्यात्मिकञ्च, शरीरादिसाधनापेक्षं वाह्यं स्तुति-दानाभिवादनादि. चित्तमात्राधीनं श्रद्धाद्याध्यात्मिकं, तथा चोक्तं "ये चैते मैत्र्यादयो ध्यायिनां विहारास्ते वाह्यसाधननिरनुग्रहात्मानः प्रकृष्टं धर्ममभिनिर्वर्त्तयन्ति, तयोर्मानसं बलीयः, कथम्? ज्ञान-वैराग्ये केनातिशय्येते? दण्डकारण्यं चित्तबलव्यतिरेकेण कः शारीरेण कर्मणा शून्यं कर्त्तुमुत्सहेत? समुद्रमगस्त्यवद्वा पिबेत्?॥ १०॥

**हेतु-फलाश्रयालम्बनैः सङ्गृहीतत्वादेषामभावे तदभावः॥ ११॥**

हेतुः धर्मात् सुखमधर्मात् दुःखं, सुखात् रागो दुःखात् द्वेषः, ततश्च प्रयत्नः, तेन मनसा वाचा कायेन वा परिस्पन्दमानः परमनुगृह्णाति उपहन्ति वा, ततः पुनर्धर्माधर्मौ सुख-दुःखे राग-द्वेषौ इति प्रवृत्तमिदं षड़रं संसारचक्रम्, अस्य च प्रतिक्षणमावर्त्तमानस्य अविद्या नेत्री मूलं सर्वक्लेशानाम्, इत्येष हेतुः। फलन्तु

---

इति। आदिशब्देनेन्द्रियधनादयो गृह्यन्ते। श्रद्धादीत्यत्रापि वीर्य्य-स्मृत्यादयो गृह्यन्ते, आन्तरत्वे सम्मतिमाचार्य्याणामाह, तथा चोक्तम् इति।—विहारो व्यापारः। प्रकृष्टं शुक्लम्। तयोः वाह्याभ्यन्तरयोर्मध्ये, ज्ञान-वैराग्ये तज्जनितौ धर्मौ. केन वाह्यसाधनधर्मेण अतिशय्येते अभिभूयेते, ज्ञान-वैराग्यजावेव धर्मौ तमभिभवतः वीजभावादपनयत इत्यर्थः। अत्रैव सुप्रसिद्धमुदाहरणमाह—दण्डकारण्यम् इति॥ १०॥

अथैताश्चित्तवृत्तयो वासनाश्चानादयश्चेत् कथमासामुच्छेदः? न खलु चितिशक्तिरनादिरुच्छिद्यत इत्यत आह—हेतु-फलाश्रयालम्बनैः सङ्गृहीतत्वादेषामभावे तदभावः इति सूत्रम्।

अनादेरपि समुच्छेदो दृष्टः, तत् यथाऽनागतत्वस्येति, सव्यभिचारित्वादसाधनं, चितिशक्तिस्तु विनाशकारणाभावान्न विनश्यति, न त्वनादित्वात्, उक्तञ्च वासनानामनादीनामपि समुच्छेदे कारणं सूत्रेणेति। अनुग्रहोपघातावपि धर्माधर्मादिनिमित्तमुपलक्षयतः, तेन सुरापानादयोऽपि सङ्गृहीता भवन्ति। नेत्री नायिका। अत्रैव हेतुमाह मूलम् इति।

यमाश्रित्य यस्य प्रत्युत्पन्नता धर्मादेः, न हि अपूर्वोपजनः, मनस्तु साधिकारमाश्रयो वासनानां, न हि अवसिताधिकारे मनसि निराश्रया वासनाः स्थातुमुत्सहन्ते। यदभिमुखीभूतं वस्तु यां वासनां व्यनक्ति तस्यास्तदालम्बनम्, एवं हेतु-फलाश्रयालम्बनैरेतैः सङ्गृहीताः सर्वा वासनाः, एषामभावे तत्संश्रयाणामपि वासनानामभावः ॥ ११ ॥

नास्त्यसतः सम्भवः, न चास्ति सतो विनाशः, इति द्रव्यत्वेन सम्भवन्त्यः कथं निवर्त्तिष्यन्ते वासनाः ? इति।

**अतीतानागतं स्वरूपतोऽस्त्यध्वभेदात् धर्माणाम् ॥ १२ ॥**

भविष्यद्व्यक्तिकमनागतम्, अनुभूतव्यक्तिकमतीतं, स्वव्यापारोपारूढं वर्त्तमानं, त्रयञ्चैतद्वस्तु ज्ञानस्य ज्ञेयं, यदि चैतत् स्वरूपतो नाभविष्यत् नेदं निर्विषयं ज्ञानमुदपत्स्यत, तस्मादतीतानागतं स्वरूपतोऽस्तीति। किञ्च भोगभागीयस्य वा अप-

---

प्रत्युत्पन्नता वर्त्तमानता, न तु धर्मस्वरूपोत्पादः, अत्रैव हेतुः, न हि इति।—यदभिमुखीभूतं वस्तु कामिनीसम्पर्कादि, व्यापकाभावे व्याप्यस्याभाव इति सूत्रार्थः ॥ ११ ॥

उत्तरसूत्रमवतारयितुं शङ्कते, नास्ति इति।—असत इति सम्पातायातं, निदर्शनाय वा।

अतीत इत्यादि सूत्रम्।—नासतामुत्पादो न सतां विनाशः, किन्तु सतामेव धर्माणामध्वभेदपरिणाम एवोदयव्ययाविति सूत्रार्थः।

अनुभूता प्राप्ता येन व्यक्तिस्तत्तथा, सम्प्रति व्यक्तिर्नास्तीति यावत्। इतश्च त्रैकाल्येऽपि धर्मः सन्नित्याह, यदि च इति।—न ह्यसन् ज्ञानविषयः सम्भवति निरुपाख्यत्वात्, विषयावभासं हि विज्ञानं नासति विषये भवति, त्रैकाल्यविषयञ्च विज्ञानं योगिनाम्, अस्मदादीनाञ्च विज्ञानमसति विषये नोत्पन्नं स्यात् उपपद्यते च, तस्मादतीतानागते सामान्यरूपेण समनुगते स्त इति। एवमनुभवतो ज्ञानं विषयसत्त्वे हेतुरुक्तम्, उद्देश्यत्वादप्यनागतस्य विषयत्वेन सत्त्वमेवेत्याह, किञ्च भोगभागीयस्य इति।—

वर्गभागोयस्य वा कर्मणः फलमुत्पित्सु, यदि निरुपाख्यमिति तदुद्देशेन तेन निमित्तेन कुशलानुष्ठानं न युज्येत। सतश्च फलस्य निमित्तं वर्त्तमानीकरणे समर्थं नापूर्वोपजनने, सिद्धं निमित्तं नैमित्तिकस्य विशेषानुग्रहणं कुरुते, नापूर्वमुत्पादयति। धर्मी च अनेकधर्मस्वभावः, तस्य चाध्वभेदेन धर्माः प्रत्यवस्थिताः, न च यथा वर्त्तमानं व्यक्तिविशेषापन्नं द्रव्यतोऽस्ति एवमतीतमनागतं वा, कथन्तर्हि ? स्वेनैव व्यङ्ग्येन स्वरूपेण अनागतमस्ति, स्वेन चानुभूतव्यक्तिकेन स्वरूपेण अतीतमिति, वर्त्तमानस्यैव अध्वनः स्वरूपव्यक्तिरिति न सा भवति अतीतानागतयोरध्वनोः, एकस्य चाध्वनः समये द्वावध्वानौ धर्मिसमन्वागतौ भवत एवेति नाभूत्वा भावस्त्रयाणामध्वनामिति ॥ १२ ॥

**ते व्यक्तसूक्ष्मा गुणात्मानः ॥ १३ ॥**

---

कुशलः निपुणः, अनुष्ठेऽपि च यत् यन्निमित्तं तत् सर्वं नैमित्तिके सत्येव विशेषमाधत्ते, यथा काञ्चनावेदाध्यायादयः, न खल्वेते काञ्चनादयोऽसन्तमुत्पादयन्ति, सत एव तत्प्राप्ति-विकारौ कुर्वन्ति। एवं कुलालादयोऽपि सत एव घटस्य वर्त्तमानभावहेतव इत्याह, सतश्च इति।—यदि तु वर्त्तमानत्वाभावादतीतानागतयोरसत्त्व, हन्त भोः! वर्त्तमानस्याप्यभावोऽतीतानागतत्वाभावात्, अन्यधर्म्यविशिष्टतया तु सत्त्व त्रयाणामप्यविशिष्टमित्यभिप्रायेणाह, धर्मी च इति।—प्रत्येकमवस्थानं प्रत्यवस्थितिरिति। द्रव्यत इति द्रव्ये धर्मिणि, सार्वविभक्तिकस्तसिः। यदि अतीतानागतावतीतानागतत्वेन सन्तर्हि वर्त्तमानसमये तत्त्वाभावान्न स्यातामित्यत आह—एकस्य च इति। प्रकृतमुपसंहरति—नाभूत्वा भाव इति ॥ १२ ॥

स्यादेतत्, अयन्तु नानाप्रकारो धर्मि-धर्मावस्थापरिणामरूपो विश्वभेदप्रपञ्चो न प्रधानादेकस्मात् भवितुमर्हति, न ह्यविलक्षणात् कारणात् कार्य्यभेदसम्भव इत्यत आह ते व्यक्त-सूक्ष्मा गुणात्मान इति सूत्रम्।—ते त्र्यध्वानो धर्मा व्यक्ताश्च सूक्ष्माश्च गुणात्मानः, न त्रैगुण्यातिरिक्तमेषामस्ति कारणं, वैचित्र्यन्तु तदाहितानादि

ते खलु अमी त्र्यध्वानो धर्मा वर्त्तमाना व्यक्तात्मानो अतीतानागताः सूक्ष्मात्मानः षड़विशेषरूपाः, सर्वमिदं गुणानां सन्निवेशविशेषमात्रमिति परमार्थतो गुणात्मानः, तथा च शास्त्रानुशासनं "गुणानां परमं रूपं न दृष्टिपथमृच्छति। यत्तु दृष्टिपथं प्राप्तं तन्मायेव सुतुच्छकम् ॥" इति ॥ १३ ॥

यदा तु सर्वे गुणाः कथमेकः शब्दः ? एकमिन्द्रियमिति ?—

## परिणामैकत्वात् वस्तुतत्त्वम्॥ १४ ॥

प्रख्याक्रियास्थितिशीलानां गुणानां ग्रहणात्मकानां करणभावेन एकः परिणामः श्रोत्रमिन्द्रियं, ग्राह्यात्मकानां शब्दभावेन एकः परिणामः शब्दो विषय इति, शब्दादीनां मूर्त्तिसमानजातीयानामेकः परिणामः पृथिवीपरमाणुस्तन्मात्रावयवः, तेषाञ्चैकः परिणामः पृथिवी गौर्वृक्षः पर्वत इत्येवमादिः,

---

क्लेशवासनानुगतावैचित्र्यात्। यथोक्तं वायुपुराणे—"वैश्वरूप्यात् प्रधानस्य परिणामोऽयमद्भुतः" इति। व्यक्तानां पृथिव्यादीनामेकादशेन्द्रियाणाञ्च वर्त्तमानानामतीतानागतत्वं षड़विशेषा यथायोगं भवन्ति।

सम्प्रति विश्वस्य नित्यानित्यरूपे विभजन् नित्यरूपमाह, सर्वमिदम इति।—इदं दृश्यमानं, सन्निवेशः संस्थानभेदवान् परिणाम इत्यर्थः। अत्रैव षष्टितन्त्रशास्त्रस्यानुशिष्टिः मायेव न तु माया, सुतुच्छकं विनाशि, यथा हि मायान्हायैवान्यथा भवति एवं विकारा अपि आविर्भाव-तिरोभावधर्माणः प्रतिक्षणमन्यथा, प्रकृतिर्नित्यतया मायाविधर्मेण परमार्था इति ॥ १३ ॥

भवतु त्रैगुण्यस्य इत्थं परिणामवैचित्र्यम्, एकस्तु परिणामः पृथिवीयमिति वा तोयमिति वा कुतः ? त्र्यात्मन एकत्वविरोधादित्याशङ्क्य सूत्रमवतारयति—यदा तु सर्वे गुणा इति।

परिणामैकत्वात् वस्तुतत्त्वमिति सूत्रम्।

बहूनामप्येकः परिणामो दृष्टः, तद्यथा गवाश्वमहिषमातङ्गानां रुमानिक्षिप्तानामेकी लवणत्वजातीयलक्षणः परिणामः, वर्त्तितैलानलानाञ्च प्रदीप इति, एवं बहुत्वेऽपि

भूतान्तरेषु अपि स्नेहौष्ण्यप्रणामित्वावकाशदानानि उपादाय सामान्यमेकविकारारम्भः समाधेयः। नास्त्यर्थो विज्ञान-विसहचरः, अस्ति तु ज्ञानमर्थविसहचरं स्वप्नादौ कल्पितमित्यनया दिशा ये वस्तुस्वरूपमपह्नुवते ज्ञानपरिकल्पनामात्रं वस्तु स्वप्नविषयोपमं न परमार्थतोऽस्तीति ये आहुः ते तथेति प्रत्युपस्थितमिदं स्वमाहात्म्येन वस्तु कथमप्रमाणात्मकेन विकल्प-

---

गुणानां परिणामैकत्वं, ततस्तन्मात्रभूत-भौतिकानां प्रत्येकं तत्त्वमेकत्वम्। ग्रहणात्मकानां सत्त्वप्रधानतया प्रकाशात्मनामहङ्कारावान्तरकार्य्याणां करणभावेनैकः परिणामः श्रोत्रमिन्द्रियं, तेषामेव गुणानां तमःप्रधानतया जड़त्वेन ग्राह्यात्मकानां शब्दतन्मात्र-भावेनैकः परिणामः शब्दो विषयः, शब्द इति शब्दतन्मात्रं, विषय इति जड़त्वमाह, न तु तन्मात्रस्य श्रोत्रविषयत्वसम्भव इति। शेषं सुगमम्। अथ विज्ञानवादिनं वैनाशिक-मुत्थापयति, नास्त्यर्थो विज्ञानविसहचर इति।—यदि हि भूत-भौतिकानि विज्ञानमात्रात् भिन्नानि भवेयुस्ततस्तदुत्पत्तिकारणमीदृशं प्रधानं कल्प्येत, न तु तानि विज्ञानातिरिक्तानि सन्ति परमार्थतः, तत् कथं प्रधानकल्पनम्? कथञ्च ग्रहणानामिन्द्रियाणामहङ्कार-विकाराणां कल्पना? इति, तथा हि जड़स्यार्थस्य स्वयमप्रकाशत्वान्नास्त्यर्थो विज्ञान-विसहचरः, साहचर्य्यं सम्बन्धः, तदभावो विसहचरः, विरभावार्थः, विज्ञानासम्बन्धी नास्तीति व्यवहारयोग्य इत्यर्थः। अस्ति तु विज्ञानमर्थविसहचरं, तस्य स्वयंप्रकाशत्वेन स्वगोचरास्तिताव्यवहारे कर्त्तव्ये जड़मर्थं प्रत्यपेक्षाभावात्, तदनेन वेद्यत्वसहोपलम्भनियमौ सूचितौ विज्ञानवादिना, तौ चैवं प्रयोगमारोहतः यत् वेद्यते येन वेदनेन तत्ततो न भिद्यते यथा ज्ञानस्य आत्मा वेद्यं, ते च भूत-भौतिकानीति विरुद्धव्याप्तोपलब्धिः, निषेध्यभेदविरुद्धेन व्याप्तं वेद्यत्वं दृश्यमानं स्वव्यापकमभेदमुपस्थापयत्तद्विरुद्धं भेदं प्रति-क्षिपतीति। तथा यत् येन नियतसहोपलम्भं तत् ततो न भिद्यते, यथैकस्माच्चन्द्रात् द्वितीयश्चन्द्रः, नियतसहोपलम्भश्चार्थो ज्ञानेनेति व्यापकविरुद्धोपलब्धिः निषेध्यभेदव्यापका-नियमविरुद्धो नियमोऽनियमं निवर्त्तयंस्तद्व्याप्तं भेदं प्रति क्षिपतीति। स्यादेतत् अर्थश्चेन्न भिन्नो ज्ञानात् कथं भिन्नवत् प्रतिभासते? इत्यत आह, कल्पितम् इति।—यथाऽऽहुर्वै-नाशिकाः,—"सहोपलम्भनियमादभेदो नील-तद्धियोः। भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दा-विवाद्वये॥" इति। कल्पितत्वं विशदयति—ज्ञानपरिकल्पना इति। निराकरोति, ते इति।—ते कथं श्रद्धेयवचनाः स्युरिति सम्बन्धः, प्रतिज्ञानमुपस्थितं प्रत्युपस्थितं,

ज्ञानबलेन वस्तुस्वरूपमुत्सृज्य तदेवापलपन्तः अश्रद्धेयवचनाः स्युः ॥ १४ ॥

कुतश्चैतदन्याय्यम्?

कथं तथा इति? यथा यथा अवभासत इदङ्कारास्पदत्वेन तथा तथा स्वयमुपस्थितं, न तु कल्पनोपकल्पितं विज्ञानविषयतापन्नम्। स्वमाहात्म्येनेति कारणत्वं विज्ञानं प्रति अर्थस्य दर्शयति, यस्मादर्थेन स्वकीयया ग्राह्यशक्त्या विज्ञानमजनि तस्मादर्थस्य ग्राहकं, तदेवम्भूतं वस्तु कथमप्रमाणात्मकेन, विकल्पज्ञानबलेन विकल्पस्याप्रमाणात्मकत्वात् तद्बलस्यापि तदात्मनोऽप्रमाणात्मकत्वं, तेन वस्तुस्वरूपमुत्सृज्य उपप्लुतं कृत्वा, उपप्लुत्येति क्वचित्कः पाठः, तत्रापि स एवार्थः, तदेवापलपन्तः अश्रद्धातव्यवचनाः स्युरिति। इदमाकूतं—सहोपलम्भनियमश्च वेद्यत्वञ्च हेतू सन्दिग्ध-व्यतिरेकतयाऽनैकान्तिकौ, तथा हि, ज्ञानाकारस्य भूत-भौतिकादेर्यदेतत् बाह्यत्वं स्थूलत्वञ्च भासेते न ते ज्ञाने सम्भवतः, तथा हि नानादेशव्यापिता स्थौल्यं, विच्छिन्नदेशता च बाह्यत्वं, न चैकविज्ञानस्य नानादेशव्यापिता विच्छिन्नदेशता चोपपद्यते, तद्देशत्वातद्देशत्वलक्षण-विरुद्धधर्मसंसर्गस्यैकत्रासम्भवात्, सम्भवे वा त्रैलोक्यस्यैकत्वप्रसङ्गात्। अत एवास्तु विज्ञानभेदः इति चेत्? हन्त भोः! परमसूक्ष्मगोचराणां प्रत्ययानां परस्परवार्त्ता-ऽनभिज्ञानां स्वगोचरमात्रजागरूकाणां कुतस्त्योऽयं स्थूलावभासः? न च विकल्पगोचराभि-लापः, संसर्गाभावात्, विशदप्रतिभासत्वाच्च, न च स्थूलमालोचितं यतस्तदुपाधिकस्य विशदता भवेत् तत् पृष्ठभाविनः, न चाविकल्पवत् विकल्पोऽपि स्वाकारमात्रगोचरः, तस्य चास्थूलत्वात् न स्थूलगोचरो भवितुमर्हति, तस्मात् बाह्ये च प्रत्यये स्थूलस्य बाह्यस्य चासम्भवादलीकमेव तत् आस्थातव्यं, न चालीकं विज्ञानादभिन्नं, विज्ञानस्य तद्वत् तुच्छत्व-प्रसङ्गात्, तथा च वेद्यत्वस्याभेदव्याप्यत्वाभावात् कुतो भेदप्रतिपक्षत्वम्? सहोपलम्भ-नियमश्च सदसतोरिव विज्ञान-स्थौल्ययोः सतोरपि स्वभावाद्वा कुतश्चित् प्रतिबन्धाद्वोप-पद्येते? तस्मादनैकान्तिकत्वादेतौ हेत्वाभासौ विकल्पमात्रमेव बाह्याभावे प्रसुवाते, न च प्रत्यक्षमाहात्म्यं विकल्पमात्रेणापोद्यते, तस्मात् साधूक्तं कथमप्रमाणात्मकेन विकल्पज्ञानबलेन इति; एतेन प्रत्ययत्वमपि स्वप्नादिप्रत्ययदृष्टान्तेन निरालम्बनत्वसाधन-मपास्तम्; प्रमेयविकल्पास्त्ववयविव्यवस्थापनेन प्रत्युक्ताः, विस्तरस्तु न्यायकणिकाया-मनुसरणीय इति तदिह कृतं विस्तरेणेति ॥ १४ ॥

तदेवमुक्तं भाष्यकृद्विज्ञानातिरिक्तस्थापने युक्तिमुक्त्वा सौत्रीं युक्तिमवतारयति—कुतश्चैतत् इति।

**वस्तुसाम्ये चित्तभेदात्तयोर्विभक्तः पन्थाः ॥ १५ ॥**

बहुचित्तावलम्बनीभूतमेकं वस्तु साधारणं, तत् खलु नैकचित्तपरिकल्पितं, नाप्यनेकचित्तपरिकल्पितं, किन्तु स्वप्रतिष्ठं, कथम् ? वस्तुसाम्ये चित्तभेदात् धर्मापेक्षं चित्तस्य वस्तुसाम्येऽपि सुखज्ञानं भवति, अधर्मापेक्षं तत एव दुःखज्ञानम्, अविद्यापेक्षं तत एव मूढ़ज्ञानं, सम्यग्दर्शनापेक्षं तत एव माध्यस्थ्यज्ञानमिति, कस्य तच्चित्तेन परिकल्पितम् ? न चान्यचित्तपरिकल्पितेनार्थेनान्यस्य चित्तोपरागो युक्तः, तस्मात् वस्तुज्ञानयोर्ग्राह्य-ग्रहणभेदभिन्नयोर्विभक्तः पन्थाः, नानयोः सङ्करगन्धोऽप्यस्तीति । साङ्ख्यपक्षे पुनर्वस्तु त्रिगुणं चलञ्च गुणवृत्तमिति धर्मादिनिमित्तापेक्षं चित्तैरभिसम्बध्यते, निमित्तानुरूपस्य च प्रत्ययस्योत्पद्यमानस्य तेन तेन आत्मना हेतुर्भवति ॥ १५ ॥

---

वस्तु···पन्थाः इति सूत्रम् ।—यन्नानात्वे यस्यैकत्व तत् ततोऽत्यन्तं भिद्यते, यथा चैत्रस्य ज्ञानमेकं भिन्नेभ्यो देवदत्त-विष्णुमित्र-मैत्रप्रत्ययेभ्यो भिद्यते, ज्ञाननानात्वेऽपि चार्थो न भिद्यत इति भवति विज्ञानेभ्योऽन्यः, अभेदश्चार्थस्य ज्ञानभेदेऽपि प्रमातॄणां परस्परप्रतिसन्धानादवसीयते, अस्ति हि रक्त-द्विष्ट-विमूढ़-मध्यस्थानामेकस्यां योषिति प्रतीयमानायां प्रतिसन्धानं या त्वया दृश्यते सैव मयाऽपीति, तस्मात् वस्तुसाम्ये चित्तभेदात्, ज्ञानभेदात्, तयोः अर्थ-ज्ञानयोः, विभक्तः पन्थाः स्वरूपभेदोपायः, सुखज्ञानं कान्तायां कान्तस्य, सपत्नीनां दुःखज्ञानं, चैत्रस्य तु तामविन्दतो मूढ़ज्ञानं, विषादः । स्यादेतत्, य एकस्य चित्तेन परिकल्पितः कामिनीलक्षणोऽर्थः तेनैवान्येषामपि चित्तमुपरज्यत इति साधारणमुपपद्यत इत्यत आह, न चान्य इति ।—तथा सत्येकस्मिन्नीलज्ञानवति सर्वं एव नीलज्ञानवन्तः स्युरिति । नन्वर्थवादिनामप्येकोऽर्थः कथं सुखादिभेदभिन्नविज्ञानहेतुः ? न हि अविलक्षणात् कारणात् कार्य्यभेदो युक्त इत्यत आह, साङ्ख्यपक्षे इति ।—एकस्यैव वाह्यस्य वस्तुनस्त्रैगुण्यपरिणामस्य त्रैरूप्यमुपपन्नम् । एवमपि सर्वेषामविशेषेण सुख-दुःख-मोहात्मक विज्ञानं स्यात् ? इत्यत आह, धर्मादिनिमित्तापेक्षम् इति ।—रजःसहितं सत्त्वं धर्मापेक्षं सुखज्ञानं जनयति, सत्त्वमेव तु विगलितरजस्कं विद्याऽपेक्षं माध्यस्थ्यज्ञानमिति, ते च धर्मादयो न सर्वे सर्वत्र पुरुषे सन्ति, किन्तु कश्चित् क्वचिदित्यभ्युपपन्ना व्यवस्थेति ॥ १५ ॥

केचिदाहुः ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवत् इति। त एतया द्वारा साधारणत्वं बाधमानाः पूर्वोत्तरेषु क्षणेषु वस्तुरूपमेव अपह्नुवते।

**न चैकचित्ततन्त्रं वस्तु तदप्रमाणकं तदा किं स्यात्? ॥ १६ ॥**

एकचित्ततन्त्रं चेत् वस्तु स्यात् तदा चित्ते व्यग्रे निरुद्धे वा स्वरूपमेव तेन अपरामृष्टमन्यस्याविषयीभूतमप्रमाणकमगृहीतस्वभावकं केनचित् तदानीं किन्तत् स्यात्? सम्बध्यमानञ्च पुनश्चित्तेन कुत उत्पद्येत? ये च अस्यानुपस्थिता

---

अत्र केचिदाहुः प्रवादुकाः ज्ञानसहभूरेवार्थो भोग्यत्वात् सुखादिवत् इति। एतदुक्तं भवति—भवत्वर्थो ज्ञानात् व्यतिरिक्तः, तथाऽप्यसौ जड़त्वात् न ज्ञानमन्तरेण शक्यः प्रतिपत्तुं, ज्ञानेन तु भासनीयः, तथा च ज्ञानसमय एवास्ति नान्यदा प्रमाणाभावात् इति। तदेतदुन्मूलं तावत् दूषयति भाष्यकारः, त एतया द्वारा इति।—वस्तु खलु सर्वचित्तसाधारणमनेकक्षणपरम्परोह्यमानं परिणामात्मकमनुभूयते लौकिकपरीक्षकैः, तच्चेद्विज्ञानेन सह भवेन्नूनमेवंविधम् एवञ्चेदिदंमंशस्योपरि कोऽयमनुरोधो येन सोऽपि नापह्नूयेतेत्यर्थः।

मा वा भूदिदमंशस्यापह्नवो ज्ञानसहभूरेवास्त्वर्थः, तथाप्याह—न चैकचित्त इत्यादि सूत्रम्।

यद्धि घटग्राहि चित्तं तत् यदा पटद्रव्यव्यग्रतया न घटे वर्त्तते, यदा विवेकविषयमासीत् तदैव च निरोधं समापद्यते तदा घटज्ञानस्य वा विवेकज्ञानस्य वा अभावात् विवेको वा घटो वा ज्ञानभेदमात्रजीवनस्तन्नाशान्नष्ट एव स्यादित्याह—एकचित्ततन्त्रम् इति। किन्तत् स्यात्? न स्यादित्यर्थः। सम्बध्यमानञ्च चित्तेन तद्वस्तुविवेको वा घटो वा कुत उत्पद्येत? नियतकारणान्वयव्यतिरेकानुविधायिभावानि हि कार्य्याणि न स्वकारणमतिवर्त्त्य कारणान्तरात् भवितुमीशते, मा भूदकारणत्वे तेषां कादाचित्कत्वव्याघातः, न च तज्ज्ञानकारणत्वमेव तत्कारणमिति युक्तम्। आम्रामोदकस्य मोदकस्य चोपयुज्यमानस्य रस-वीर्य्य-विपाकादिसाम्यप्रसङ्गात्, तस्मात् साधूक्तं—'सम्बध्यमानञ्च पुनश्चित्तेन कुत उत्पद्येत?' इति। अपि च यो योऽर्वाग्भागः स सर्वो

भागास्ते चास्य न स्युः, एवं नास्ति पृष्ठमित्युदरमपि न गृह्येत, तस्मात् स्वतन्त्रोऽर्थः सर्वपुरुषसाधारणः, स्वतन्त्राणि च चित्तानि प्रतिपुरुषं प्रवर्त्तन्ते, तयोः सम्बन्धादुपलब्धिः पुरुषस्य भोग इति ॥ १६ ॥

**तदुपरागापेक्षित्वाच्चित्तस्य वस्तु ज्ञाताज्ञातम् ॥ १७ ॥**

अयस्कान्तमणिकल्पा विषया अयःसधर्मकं चित्तमभिसम्बध्योपरञ्जयन्ति, येन च विषयेणोपरक्तं चित्तं स विषयो ज्ञातस्ततोऽन्यः पुनरज्ञातः, वस्तुनो ज्ञाताज्ञातस्वरूपत्वात् परिणामि चित्तम् ॥ १७ ॥

---

मध्यपरभागव्याप्तः, ज्ञानाधीने सद्भावे त्वस्याननुभूयमानत्वान्मध्य-परभागौ न स्त इति व्यापकाभावादर्वाग्भागोऽपि न स्यादित्यर्थाभावात् कुतो ज्ञानसहभूरर्थः? इत्याह, ये चास्य इति।—अनुपस्थिता अज्ञाताः। उपसंहरति—तस्मात् इति। शेषं सुगमम् ॥ १६ ॥

स्यादेतत्, अर्थश्चेत् स्वतन्त्रः स च जड़स्वभाव इति न कदाचित् प्रकाशेत, प्रकाशने वा जड़त्वमप्यस्यापगतमिति भावोऽप्यपगच्छेत्, न जातु स्वभावमपहाय भावो वर्त्तितुमर्हति, न चेन्द्रियाद्याधेयो जड़स्वभावस्यार्थस्य धर्मः प्रकाश इति साम्प्रतं, अर्थ-धर्मत्वे नीलत्वादिवत् सर्वपुरुषसाधारण इत्येकः शास्त्रार्थज्ञ इति सर्वे विद्वांसः प्रसज्येरन्, न जाज्ञः कश्चिदस्ति, न चातीतानागतयोर्धर्मः प्रत्युत्पन्नो युक्तः, तस्मात् स्वतन्त्रोऽयं उपलम्भविषय इति मनोरथमात्रमेतदित्यत आह, तदुपराग इत्यादि सूत्रम्।—जड़स्वभावोऽप्यर्थं इन्द्रियप्रनाड़िकया चित्तमुपरञ्जयति, तदेवम्भूतं चित्तदर्पणमुपसङ्क्रान्तप्रतिबिम्बा चितिशक्तिश्चित्तमर्थोपरक्तं चेतयमाना अर्थमनुभवति, न त्वर्थे किञ्चित् प्राकट्यादिकमाधत्ते, नाप्यसम्बद्धा चित्तेन, तत्प्रतिबिम्बसङ्क्रान्तेरुक्तत्वात् इति।

यद्यपि च सर्वगतत्वाच्चित्तस्य चेन्द्रियस्य चाऽऽहङ्कारिकस्य विषयैरास्ति सम्बन्धः, तथापि यत्र शरीरे वृत्तिमच्चित्तं तेन सह सम्बन्धो विषयाणामित्ययस्कान्तमणिकल्पा इत्युक्तम्, अयः-सधर्मकं चित्तमिति इन्द्रियप्रनाड़िकयाभिसम्बध्योपरञ्जयन्ति। अत एव चित्तं परिणामीत्याह—वस्तुनः इति ॥ १७ ॥

यस्य तु तदेव चित्तं विषयस्तस्य—

**सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात् ॥ १८ ॥**

यदि चित्तवत् प्रभुरपि पुरुषः परिणमेत ततस्तद्विषयाश्चित्तवृत्तयः शब्दादिविषयवत् ज्ञाताज्ञाताः स्युः, सदा ज्ञातत्वन्तु मनसस्तत्प्रभोः पुरुषस्यापरिणामित्वमनुमापयति ॥ १८ ॥

स्यादाशङ्का चित्तमेव स्वाभासं विषयाभासञ्च भविष्यति अग्निवत्,

**न तत् स्वाभासं दृश्यत्वात् ॥ १९ ॥**

तदेवं चित्तव्यतिरेकिणमर्थमवस्थाप्य तेभ्यः परिणतिधर्मकेभ्यो व्यतिरिक्तमात्मानमादर्शयितुं तद्धर्म्यापरिणामित्वमस्य वक्तुं पूरयित्वा सूत्रं पठति, यस्य तु तदेव चित्तं विषयस्तस्य सदा ज्ञाताश्चित्तवृत्तयस्तत्प्रभोः पुरुषस्यापरिणामित्वात्—क्षिप्त-मूढ़-विक्षिप्तैकाग्रताऽवस्थितं चित्तमा-निरोधात् सर्वदा पुरुषेणानुभूयते वृत्तिमत्, तत् कस्य हेतोः? यतः पुरुषोऽपरिणामी, परिणामित्वे चित्तवत् पुरुषोऽपि ज्ञाताज्ञातविषयी भवेत्, ज्ञातविषय एव त्वयं, तस्मादपरिणामी, ततश्च परिणामिभ्योऽतिरिच्यत इति।

तदेतदाह, यदि चित्तवदिति।—सदा ज्ञातत्वन्तु मनसः सवृत्तिकस्य, तस्य यः प्रभुः स्वामी, भोक्तेति यावत्, तस्य प्रभोः पुरुषस्यापरिणामित्वमनुमापयति, तथा चापरिणामिनस्तस्य परिणामिनश्चित्तात् पुरुषस्य भेद इति भावः ॥ १८ ॥

अत्र वैनाशिकमुत्थापयति, स्यादाशङ्का इति।—अयमर्थः,—स्यादेवं यदि चित्तमात्मनो विषयः स्यात्, न त्वेतदस्ति, अपि तु स्वप्रकाशमेतद्विषयाभासं पूर्वचित्तं प्रतीत्य समुत्पन्नं, तत् कुतः पुरुषस्य सदा ज्ञातविषयत्वम्? कुतस्तराञ्च परिणामिनश्चित्ताद्भेद इति?

न तत् इत्यादि सूत्रम्।—भवेदेतदेवं यदि स्वसंवेदनं चित्तं स्यान्न त्वेतदस्ति, तद्धि परिणामितया नीलादिवदनुभवव्याप्यं, यच्चानुभवव्याप्यं न तत् स्वाभासं भवितुमर्हति, स्वात्मनि वृत्तिविरोधात्, न हि तदेव क्रिया च कर्म च कारकञ्च, न हि पाकः पच्यते छिदा वा छिद्यते, पुरुषस्त्वपरिणामी नानुभवकर्म इति नास्मिन् स्वयम्प्रकाशता न युज्यते, अपराधीनप्रकाशतो ह्यस्य स्वयम्प्रकाशता, नानुभवकर्मतः, तस्मात् दृश्यत्वात् दर्शनकर्म

यथेतराणीन्द्रियाणि शब्दादयश्च दृश्यत्वान्न स्वाभासानि तथा मनोऽपि प्रत्येतव्यं, न चाग्निरत्र दृष्टान्तः, न हि अग्निरात्मस्वरूपमप्रकाशं प्रकाशयति, प्रकाशश्चायं प्रकाश्य-प्रकाशकसंयोगे दृष्टः, न च स्वरूपमात्रेऽस्ति संयोगः। किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्यचिदिति शब्दार्थः, तद्यथा स्वात्मप्रतिष्ठमाकाशं न परप्रतिष्ठम् इत्यर्थः, स्वबुद्धि-प्रचारप्रतिसंवेदनात् सत्त्वानां प्रवृत्तिर्दृश्यते, क्रुद्धोऽहं भीतो-ऽहममुत्र मे रागोऽमुत्र मे क्रोध इति, एतत् स्वबुद्धेरग्रहणे न युक्तमिति ॥ १९ ॥

**एकसमये चोभयानवधारणम् ॥ २० ॥**

चित्तं न स्वाभासम्, आत्मप्रकाशप्रतिविम्बितस्यैव चित्तस्य तद्वृत्तिविषयाः प्रकाशन्त इति भावः। ननु दृश्योऽग्निः स्वयम्प्रकाशश्च, न हि यथा घटादयोऽग्निना व्यज्यन्ते एवमग्निरग्न्यन्तरेणेत्यत आह—न चाग्निरत्र इति। कस्मात्? न हि अग्निः इति।—मा नामाग्निरग्न्यन्तरात् प्रकाशिष्ट विज्ञानात्तु प्रकाशत इति न स्वयम्प्रकाश इति न व्यभिचार इत्यर्थः। प्रकाशश्चायम् इति।—अयमिति पुरुषस्वभावात् प्रकाशात् व्यवच्छिनत्ति, क्रियारूपः प्रकाश इति यावत्। एतदुक्तं भवति—या या क्रिया सा सा सर्वा कर्त्तृ-करण-कर्मसम्बन्धेन दृष्टा, यथा पाको दृष्टश्चैवाग्नितण्डुलसम्बन्धेन, तथा प्रकाशोऽपि क्रिया इति, तयाऽपि तथा भवितव्यं, सम्बन्धश्च भेदाश्रयो नाभेदे सम्भवतीत्यर्थः। किञ्च स्वाभासं चित्तमित्यग्राह्यमेव कस्यचिदिति शब्दार्थः। स्यादेतत्, मा भूत् ग्राह्यं चित्तं न हि ग्रहणस्याकारणस्या-व्यापकस्य च निवृत्तौ चित्तनिवृत्तिः, इत्यत आह, स्वबुद्धि इति।—बुद्धिः चित्तं, प्रचाराः व्यापाराः, सत्त्वाः प्राणिनः, चित्तस्य वृत्तिभेदाः क्रोध-लोभादयः स्वाश्रयेण चित्तेन स्वविषयेण च सह प्रत्यात्ममनुभूयमानाश्चित्तस्याग्राह्यतां विघटयन्तीत्यर्थः। स्वबुद्धि-प्रचारप्रतिसंवेदनमेव विशदयति—क्रुद्धोऽहम् इति ॥ १९ ॥

एकसमये चोभयानवधारणमिति सूत्रम्।—स्वाभासं विषयाभासं चित्तमिति ब्रुवाणो न तावत् येनैव व्यापारेणात्मानमवधारयति तेनैव विषयमपीति वक्तुमर्हति, न ह्यविलक्षणो व्यापारः कार्य्यभेदाय पर्य्याप्तः, तस्मात् व्यापारभेदोऽङ्गीकर्त्तव्यः, न च बैनाशिकानामुत्पत्तिभेदातिरिक्तोऽस्ति व्यापारः न चैकस्या एवोत्पत्तेर्विलक्षणायाः

न चैकस्मिन् क्षणे स्व-पररूपावधारणं युक्तं, क्षणिकवादिनो यत् भवनं सैव क्रिया तदेव च कारकमित्यभ्युपगमः ॥ २० ॥

स्यान्मतिः स्वरसनिरुद्धं चित्तं चित्तान्तरेण गृह्यत इति ।

**चित्तान्तरदृश्ये बुद्धिबुद्धेरतिप्रसङ्गः स्मृतिसङ्करश्च ॥ २१ ॥**

अथ चित्तं चेच्चित्तान्तरेण गृह्येत, बुद्धिबुद्धिः केन गृह्यते ? साऽप्यन्यया साऽप्यन्ययेत्यतिप्रसङ्गः स्मृतिसङ्करश्च, यावन्तो बुद्धिबुद्धीनामनुभवास्तावत्यः स्मृतयः प्राप्नुवन्ति, तत्सङ्कराच्चैकस्मृत्यनवधारणञ्च स्यात्, इत्येवं बुद्धिप्रतिसंवेदिनं पुरुषमपलपद्भिर्वैनाशिकैः सर्वमेव आकुलीकृतं, ते तु भोक्तृस्वरूपं यत्र क्वचन कल्पयन्तो न न्यायेन सङ्गच्छन्ते, केचित् सत्त्वमात्रमपि परिकल्प्यास्ति स सत्त्वो य एतान् पञ्च स्कन्धान् निक्षिप्यान्यांश्च प्रतिसन्दधातीत्युक्त्वा तत एव पुनस्त्रस्यन्ति,

---

कार्य्यैकलक्षणसम्भवः, तस्याकस्मिकत्वप्रसङ्गात्, न चैकस्योत्पत्तिद्वयसम्भवः, तस्मादर्थस्य च ज्ञानरूपस्य चावधारणं नैकस्मिन् समय इति ।

तदेतत् भाष्येणोच्यते, न चैकस्मिन् क्षणे इति ।—तथा चोक्तं वैनाशिकैः,—"भूतिर्येषां क्रिया सैव कारकं सैव चोच्यते" इति, तस्मात् दृश्यत्वमेतच्चित्तस्य सदातनं स्वाभासत्वमपनयत् द्रष्टारञ्च द्रष्टुरपरिणामित्वञ्च दर्शयतीति सिद्धम् ॥ २० ॥

पुनः वैनाशिकमुत्थापयति, स्यान्मतिः इति ।—मा भूत् दृश्यत्वेन स्वसंवेदनम्, एवमप्यात्मा न सिध्यति, स्वसन्तानवर्त्तिना चरमचित्तक्षणेन स्वरसनिरुद्धस्वजनकवितक्षणग्रहणादित्यर्थः, समत्र तज्ज्ञानत्वेन, अनन्तरत्वाव्यवहितत्वेन, समनन्तरं तेन ।

चित्तान्तर इत्यादि सूत्रम् ।—बुद्धिः इति चित्तमित्यर्थः । नागृहीता चरमा बुद्धिः पूर्वबुद्धिग्रहणसमर्था, न हि बुद्ध्याऽसम्बद्धा पूर्वा बुद्धिर्बुद्धा भवितुमर्हति, न ह्यगृहीतदण्डो दण्डिनमवगन्तुमर्हति, तस्मादनवस्थेति । विज्ञान-वेदना-संज्ञा रूप-संस्काराः

तथा स्कन्धानां महानिर्वेदाय विरागायानुत्पादाय प्रशान्तये गुरोरन्तिके ब्रह्मचर्य्यं चरिष्यामीत्युक्त्वा सत्त्वस्य पुनः सत्त्वमेवापह्नवते। साङ्ख्ययोगादयस्तु प्रवादाः स्वशब्देन पुरुषमेव स्वामिनं चित्तस्य भोक्तारमुपयन्ति इति ॥ २१ ॥

कथम्,—

**चितेरप्रतिसङ्क्रमायास्तदाकारापत्तौ स्वबुद्धिसंवेदनम् ॥ २२ ॥**

अपरिणामिनी हि भोक्तृशक्तिरप्रतिसङ्क्रमा च परिणामिन्यर्थे प्रतिसङ्क्रान्तेव तद्वृत्तिमनुपतति, तस्याश्च प्राप्तचैतन्योपग्रहस्वरूपाया बुद्धिवृत्तेरनुकारिमात्रतया बुद्धिवृत्त्यविशिष्टा हि ज्ञानवृत्तिराख्यायते। तथाचोक्तं "न पातालं न

स्कन्धाः। साङ्ख्ययोगादयस्तु प्रवादाः साङ्ख्याश्च योगाश्च ते एवादयो येषां वैशेषिकादिप्रवादानां ते साङ्ख्ययोगादयः प्रवादाः। सुगममन्यत् ॥ २१ ॥

स्यादेतत्, यदि चित्तं न स्वाभासं नापि चित्तान्तरवेद्यम् आत्मनापि कथं भोत्स्यते चित्तम्? न खल्वात्मनः स्वयम्प्रकाशस्याप्यस्ति काचित् क्रिया, न च तामन्तरेण कर्त्ता, न चासम्बद्धश्चित्तेन कर्मणा तस्य भोक्ता, अतिप्रसङ्गात्, इत्याशयवान् पृच्छति—कथम् इति।

सूत्रेणोत्तरमाह, चितेः इत्यादि।—यत् तदवोचत् वृत्तिसारूप्यमितरत्र इति, तदितः समुत्थितं चितेः स्वबुद्धिसंवेदनं बुद्धेस्तदाकारापत्तौ चितिप्रतिबिम्बाधारतया तद्रूपतापत्तौ सत्यां, यथा हि चन्द्रमसः क्रियामन्तरेणापि सङ्क्रान्तचन्द्रप्रतिबिम्बममलं जलमचलं चलमिव चन्द्रमसमवभासयति एवं विनाऽपि चितिव्यापारमुपसङ्क्रान्तचितिप्रतिबिम्बं चित्तं स्वगतया क्रियया क्रियावतीमसङ्गतामपि सङ्गतां चितिशक्तिमवभासयत् भोग्यभावमासादयत् भोक्तृभावमापादयति तस्या इति सूत्रार्थः।

भाष्यमप्येतदर्थमसकृत्तत्र तत्र व्याख्यातमिति न व्याख्यातमत्र। बुद्धिवृत्त्यविशिष्टत्वे ज्ञानवृत्तेरागममुदाहरति, तथा चोक्तं न पातालम् इति।—शाश्वतस्य शिवस्य ब्रह्मणो विशुद्धस्वभावस्य चितिच्छायामापन्नां मनोवृत्तिमेव चितिच्छायापन्न-

च विवरं गिरीणां नैवान्धकारं कुक्षयो नोदधीनाम्। गुहा यस्यां निहितं ब्रह्म शाश्वतं बुद्धिवृत्तिमविशिष्टां कवयो वेदयन्ते॥" इति॥ २२॥

अतश्चैतदभ्युपगम्यते—

**द्रष्टृदृश्योपरक्तं चित्तं सर्वार्थम्॥ २३॥**

मनो हि मन्तव्येनार्थेनोपरक्तं तत्स्वयञ्च विषयत्वाद्विषयिणा पुरुषेण आत्मीयया वृत्त्याभिसम्बद्धं तदेतच्चित्तमेव द्रष्टृदृश्योपरक्तं विषयविषयिनिर्भासं चेतनाचेतनस्वरूपापन्नं विषयात्मकमप्यविषयात्मकमिवाचेतनं चेतनमिव स्फटिकमणिकल्पं सर्वार्थमिति उच्यते, तदनेन चित्तसारूप्येण भ्रान्ताः केचित्तदेव चेतनमित्याहुः, अपरे चित्तमात्रमेवेदं

---

त्वाच्चितेरप्यविशिष्टां गुहां वेदयन्ते, तस्यामेव गुहायां तत् गुह्यं ब्रह्म, तदपनये तु स्वयम्प्रकाशमनावरणमनुपसर्गं प्रद्योतते चरमदेहस्य भगवत इति॥ २२॥

तदेवं दृश्यत्वेन चित्तस्य परिणामिनस्तदतिरिक्तः पुमानपरिणतिधर्मोपपादितः, सम्प्रति लोकप्रत्यक्षमप्यत्र प्रमाणयति, अतश्चैतत् इति।—अवश्यं चैतदित्यर्थः।

द्रष्टृ-दृश्योपरक्तं चित्तं सर्वार्थमिति सूत्रम्।—यथा हि नीलाद्यनुरक्तं चित्तं नीलाद्यर्थं प्रत्यक्षेणैवावस्थापयति, एवं द्रष्टृच्छायापत्त्या तदनुरक्तं चित्तं द्रष्टारमपि प्रत्यक्षेणावस्थापयति, अस्ति हि इदमाकारं ज्ञानं नीलमहं सम्प्रत्येमि इति, तस्मात् ज्ञेयवत् ज्ञाताऽपि प्रत्यक्षसिद्धोऽपि न विविच्यावस्थापितः, यथा जले चन्द्रमसो बिम्बं, न त्वेतावता तदप्रत्यक्षं, न चास्य जलगतत्वे तदप्रमाणमिति चन्द्ररूपेऽप्यप्रमाणं भवितुमर्हति, तस्माच्चित्तप्रतिबिम्बिततया चैतन्यगोचराऽपि चित्तवृत्तिर्न चैतन्यगोचरेति, तदिदं सर्वार्थत्वं चित्तस्येति।

तदेतदाह, मनो हि इति।—न केवलं तदाकारापत्त्या मन्तव्येनार्थेनोपरक्तं मनोऽपि तु स्वयं चेति, चकारो भिन्नक्रमः, पुरुषेणेत्यस्यानन्तरं द्रष्टव्यः, तच्छायापत्तिः पुरुषस्य वृत्तिः। इयञ्च चैतन्यच्छायापत्तिश्चित्तस्य वैनाशिकैरभ्युपेतव्या, कथमन्यथा चित्ते चैतन्यमेते आरोपयाम्बभूवुः? इत्याह, तदनेन इति।—केचित् वैनाशिका बाह्यार्थवादिनः। अपरे

सर्वं नास्ति खल्वयं गवादिर्घटादिश्च सकारणो लोक इति, अनुकम्पनीयास्ते, कस्मात्? अस्ति हि तेषां भ्रान्तिबीजं सर्वरूपाकारनिर्भासं चित्तमिति, समाधिप्रज्ञायां प्रज्ञेयोऽर्थः प्रतिबिम्बीभूतस्तस्यालम्बनीभूतत्वादन्यः, स चेदर्थश्चित्तमात्रं स्यात् कथं प्रज्ञयैव प्रज्ञारूपमवधार्य्येत? तस्मात् प्रतिबिम्बीभूतोऽर्थः प्रज्ञायां येनावधार्य्यते स पुरुष इति। एवं ग्रहीतृग्रहणग्राह्यस्वरूपचित्तभेदात् त्रयमप्येतत् जातितः प्रविभजन्ते सम्यग्दर्शिनः, तैरधिगतः पुरुष इति ॥ २३ ॥

कुतश्चैतत्?—

**तदसङ्ख्येयवासनाभिश्चित्रमपि परार्थं संहत्यकारित्वात् ॥ २४ ॥**

---

विज्ञानमात्रवादिनः। ननु यदि चित्तमेव द्रष्टाकारं दृश्याकारञ्चानुभूयते, हन्त! चित्तादभिन्नावेवास्तां द्रष्टृ-दृश्यौ, यथाहुः,—"अभिन्नोऽपि हि बुद्ध्यात्मा विपर्य्यासितदर्शनैः। ग्राह्य-ग्राहकसंवित्तिभेदवानिव लक्ष्यते॥" इति, तत् कथमेतेऽनुकम्पनीयाः? इत्यत आह, समाधिप्रज्ञायाम् इति।—ते खलूक्ताभिरुपपत्तिभिश्चित्तातिरिक्तं पुरुषमभ्युपगमय्याप्यष्टाङ्गयोगोपदेशेन समाधिप्रज्ञायामात्मगोचरायामवतार्य्य बोधयितव्याः, तद्यथा समाधिप्रज्ञायां प्रज्ञेयोऽयं आत्मा प्रतिबिम्बीभूतोऽन्यः, कस्मात्? तस्यात्मन आलम्बनीभूतत्वात्। अथ चित्तादभिन्नमेव कस्मान्नालम्बनं भवतीति यदि युक्तिबोधितोऽपि वैजात्यात् वदेत् तत्र हेतुमाह, स चेत् इति।—स चेदात्मरूपोऽर्थश्चित्तमात्रं स्यान्न तु ततो व्यतिरिक्तः, ततः कथं प्रज्ञयैव प्रज्ञारूपमवधार्य्येत? स्वात्मनि वृत्तिविरोधात्। उपसंहरति—तस्मात् इति। समीचीनोपदेशेनानुकम्पिता भवन्तीत्याह, एवम् इति।—जातितः स्वभावत इत्यर्थः॥ २३॥

चित्तातिरिक्तात्मसद्भावे हेत्वन्तरमवतारयति—कुतश्चैतत् इति।

तद···त्वात् इति सूत्रम्।—यद्यप्यसङ्ख्येयाः कर्मवासनाः क्लेशवासनाश्च चित्तमेवाधिशेरते न तु पुरुषं, तथा च वासनाधीना विपाकाश्चित्ताश्रयतया चित्तस्य भोक्तृतामावहन्ति, भोक्तुरर्थं च भोग्यमिति सर्वं चित्तार्थं प्राप्तं, तथापि तच्चित्तमसङ्ख्येयवासनाविचित्रमपि परार्थं, कस्मात्? संहत्यकारित्वादिति सूत्रार्थः।

तदेतच्चित्तमसङ्ख्येयाभिर्वासनाभिरेव चित्रीकृतमपि परार्थं परस्य भोगापवर्गार्थं न स्वार्थं संहत्यकारित्वात् गृहवत्, संहतकारिणा चित्तेन न स्वार्थेन भवितव्यं, न सुखचित्तं सुखार्थं, न ज्ञानं ज्ञानार्थम्, उभयमप्येतत् परार्थं, यश्च भोगेनापवर्गेण चार्थेनार्थवान् पुरुषः स एव परो न परः सामान्यमात्रं, यत्तु किञ्चित् परं सामान्यमात्रं स्वरूपेणोदाहरेद्वैनाशिकस्तत्सर्वं संहत्यकारित्वात् परार्थमेव स्यात्, यस्त्वसौ परो विशेषः स न संहत्यकारी पुरुष इति ॥ २४ ॥

**विशेषदर्शिन आत्मभावभावनाविनिवृत्तिः ॥२५॥**

यथा प्रावृषि तृणाङ्कुरस्योद्भेदेन तद्बीजसत्तानुमीयते

व्याचष्टे—तदेतत् इति। स्यादेतत् चित्तं संहत्यापि करिष्यति स्वार्थञ्च भविष्यति कः खलु विरोधः ? इति यदि कश्चित् ब्रूयात्तं प्रत्याह, संहत्यकारिणा इति।—सुखचित्तमिति भोगमुपलक्षयति, तेन दुःखचित्तमपि द्रष्टव्यं. ज्ञानमित्यपवर्ग उक्तः। एतदुक्तं भवति—सुखदुःखे चित्ते प्रतिकूलानुकूलात्मके नात्मनि सम्भवतः, स्वात्मनि वृत्तिविरोधात्, न चान्योऽपि संहत्यकारी साक्षात् परम्परया वा सुखदुःखे विदधानस्ताभ्यामनुकूलनीयः प्रतिकूलनीयो वा, तस्मात् यः साक्षात् परम्परया वा सुखदुःखयोर्न व्याप्रियेत स एव आभ्यामनुकूलनीयः प्रतिकूलनीयो वा, स च नित्योदासीनः पुरुषः, एवमपवृज्यते येन ज्ञानेन तस्यापि ज्ञेयतन्त्रत्वात् स्वात्मनि च वृत्तिविरोधान्न ज्ञानार्थत्वं, न चान्यविषयादस्मादपवर्गसम्भवः, विदेहप्रकृतिलयानामपवर्गासम्भवात्. तस्मात् ज्ञानमपि पुरुषार्थमेव न तत् स्वार्थं नापि परमार्थं, संहतपरार्थत्वे चानवस्थाप्रसङ्गादसंहतपरार्थसिद्धिरिति ॥ २४ ॥

तदेवं कैवल्यमूलबीजं युक्तिमयमात्मदर्शनमुक्त्वा तदुपदेशाधिकृतं पुरुषमनधिकृतपुरुषान्तरात् व्यावृत्तमाह, विशेष···वृत्तिः इति सूत्रम्।—यस्य आत्मभावे भावना अस्ति तस्याष्टाङ्गयोगोपदेशादनुतिष्ठतो युञ्जानस्य तत्परिपाकाच्चित्तसत्त्वपुरुषयोर्विशेषदर्शनात् आत्मभावभावना निवर्त्तते, यस्य आत्मभावभावनैव नास्ति नास्तिकस्य तस्योपदेशानधिकृतस्यापरिनिश्चितात्म-तत्परलोकभावस्य नोपदेशो न विशेषदर्शनं न आत्मभावभावनानिवृत्तिरिति सूत्रार्थः।

नन्वात्मभावभावनाया श्चित्तवर्त्तिन्याः कुतोऽवगमः ? इत्यत आह, यथा प्रावृषि

तथा मोक्षमार्गश्रवणेन यस्य रोमहर्षाश्रुपातौ दृश्येते तत्रा-प्यस्ति विशेषदर्शनबीजमपवर्गभागीयं कर्माभिनिर्वर्त्तित-मित्यनुमीयते, तस्यात्मभावभावना स्वाभाविकी प्रवर्त्तते, यस्याभावादिदमुक्तं स्वभावं मुक्त्वा दोषात् येषां पूर्वपक्षे रुचिर्भवति अरुचिश्च निर्णये भवति तत्र आत्मभावभावना कोऽहमासं कथमहमासं किंस्वित् इदं कथं स्विदिदं के भवि-ष्यामः कथं वा भविष्याम इति, सा तु विशेषदर्शिनो निव-र्त्तते, कुतः? चित्तस्यैष विचित्रः परिणामः, पुरुषस्त्वसत्याम-विद्यायां शुद्धश्चित्तधर्मैरपरामृष्ट इति, ततोऽस्य आत्मभाव-भावना कुशलस्य निवर्त्तत इति ॥ २५ ॥

**तदा विवेकनिम्नं कैवल्यप्राग्भारं चित्तम् ॥२६॥**

तदानीं यदस्य चित्तं विषयप्राग्भारमज्ञाननिम्नमासी-त्तदस्य अन्यथा भवति, कैवल्यप्राग्भारं विवेकजज्ञाननिम्न-मिति ॥ २६ ॥

**तच्छिद्रेषु प्रत्ययान्तराणि संस्कारेभ्यः ॥२७॥**

---

इति।—प्राग्भवीयं तत्त्वदर्शनबीजमपवर्गभागीयं यत् कर्माष्टाङ्गयोगानुष्ठानं तदेकदेशानु-ष्ठानं वा तदभिनिर्वर्त्तितमस्तीत्यनुमीयते, तस्य चात्मभावभावना अवश्यमेव स्वाभाविकी वस्त्वभ्यासं विनापि प्रवर्त्तते। अनधिकारिणमागमिनां वचनेन दर्शयति—यस्य अभावादिदम् इति। पूर्वपक्षः,—नास्ति कर्मफलं परलोकिनोऽभावात् परलोकाभावात्, तत्र रुचिः, अरुचिश्च निर्णये पञ्चविंशतितत्त्वविषये। आत्मभावभावना प्राक् व्याख्याता। विशेषदर्शिनः परामर्शमाह, चित्तस्यैष इति।—तस्य विशेषदर्शनकुशलस्य आत्मभावभावना विनिवर्त्तत इति ॥ २५ ॥

अथ विशेषदर्शिनः कीदृशं चित्तम्? इत्यत आह, तदा···चित्तमिति सूत्रम्।—निगदव्याख्यातम ॥ २६ ॥

स्यादेतत्, विशेषदर्शनं चेद्विवेकनिम्नं न जातु व्युत्थितं स्यात्, दृश्यते चास्य भिक्षामटतो व्युत्थितम्, इत्यत आह—तच्छिद्रेषु इत्यादि सूत्रम्।



प्रत्ययविवेकनिम्नस्य सत्त्वपुरुषान्यताख्यातिमात्रप्रवाहिणश्चित्तस्य तच्छिद्रेषु प्रत्ययान्तराणि अस्मीति वा, ममेति वा, जानामीति वा, न जानामीति वा। कुतः? क्षीयमाणबीजेभ्यः पूर्वसंस्कारेभ्य इति ॥ २७ ॥

हानमेषां क्लेशवदुक्तम् ॥ २८ ॥

यथा क्लेशा दग्धबीजभावा न प्ररोहसमर्था भवन्ति तथा ज्ञानाग्निना दग्धबीजभावः पूर्वसंस्कारो न प्रत्ययप्रसूर्भवति, ज्ञानसंस्कारास्तु चित्ताधिकारसमाप्तिमनुशेरत इति न चिन्त्यन्ते ॥ २८ ॥

प्रसङ्ख्यानेऽप्यकुसीदस्य सर्वथा विवेकख्यातेर्धर्ममेघः समाधिः ॥ २९ ॥

---

प्रतीयते येन स प्रत्ययः चित्तसत्त्वं, तस्माद्विवेकख्यितेः, तेन निम्नस्य। जानामीति साक्षान्मोहो विविच्य दर्शित', न जानामीति मोहः, तन्मूलावहङ्कार-ममकारावहमस्मीति वा ममेति वा दर्शितौ। क्षीयमाणानि च तानि बीजानि चेति समासः। पूर्वसंस्कारेभ्यः व्युत्थानसंस्कारेभ्यः ॥ २७ ॥

स्यादेतत्, सत्यपि विवेकज्ञाने व्युत्थानसंस्कारा यदि प्रत्ययान्तराणि प्रसुवते, कस्तर्हि हानहेतुरेतेषाम्? यतः प्रत्ययान्तराणि न पुनः प्रसुवीरन्नित्यत आह—हानमेषां क्लेशवदुक्तम् इति सूत्रम्।

अपरिपक्वविवेकज्ञानस्याक्षीयमाणा व्युत्थानसंस्काराः प्रत्ययान्तरं प्रसुवते न तु परिपक्वविवेकज्ञानस्य क्षीणाः प्रत्ययान्तराणि प्रसोतुमर्हन्ति. यथा विवेकच्छिद्रसमुत्पन्ना अपि क्लेशा न संस्कारान्तरं प्रसुवते, तत् कस्य हेतोः? तदेते क्लेशा विवेकज्ञानवह्निदग्धबीजभावा इति, एवं व्युत्थानसंस्कारा अपीति। अथ व्युत्थानसंस्कारा विवेकज्ञानसंस्कारैर्निरोद्धव्याः, विवेकसंस्काराश्च निरोधसंस्कारैः, निरोधसंस्काराणान्त्वबाह्यविषयत्वं दर्शितं, निरोधोपायः प्रायश्चित्तनीय इत्यत आह, ज्ञानसंस्कारास्तु इति।—परवैराग्यसंस्कारा इत्यर्थः ॥ २८ ॥

तदेवं सूत्रकारो व्युत्थाननिरोधोपायं प्रसङ्ख्यानमुक्त्वा प्रसङ्ख्याननिरोधोपायमाह—प्रस…समाधिः इति सूत्रम्।

यदायं ब्राह्मणः प्रसङ्ख्यानेऽप्यकुसीदः ततोऽपि न किञ्चित् प्रार्थयते, तत्रापि विरक्तस्य सर्वथा विवेकख्यातिरेव भवतीति, संस्कारबीजक्षयान्नास्य प्रत्ययान्तराणि उत्पद्यन्ते, तदा अस्य धर्ममेघो नाम समाधिर्भवति ॥ २९ ॥

## ततः क्लेशकर्मनिवृत्तिः ॥ ३० ॥

तल्लाभादविद्यादयः क्लेशाः समूलकाषं कषिता भवन्ति, कुशलाकुशलाश्च कर्माशयाः समूलघातं हता भवन्ति, क्लेशकर्मनिवृत्तौ जीवन्नेव विद्वान् विमुक्तो भवति, कस्मात्? यस्माद्विपर्य्ययो भवस्य कारणं, न हि क्षीणविपर्य्ययः कश्चित् केनचित् क्वचिज्जातो दृश्यत इति ॥ ३० ॥

## तदा सर्वावरणमलापेतस्य ज्ञानस्य आनन्त्याज्ज्ञेयमल्पम् ॥ ३१ ॥

---

ततोऽपि प्रसङ्ख्यानादपि, न किञ्चित् सर्वभावाधिष्ठातृत्वादि, प्रार्थयते प्रत्युत तत्रापि क्लिश्नाति, परिणामित्वदोषदर्शनेन विरक्तः, सर्वथा विवेकख्यातिरेव भवति। एतदेव विवृणोति, तत्रापि इति।—यदा व्युत्थानप्रत्यया भवेयुस्तदा नायं ब्राह्मणः सर्वथा विवेकख्यातिः, यतस्तस्य न प्रत्ययान्तराणि भवन्ति, ततः सर्वथा विवेकख्यातिरित, तदास्य धर्ममेघः समाधिर्भवति। एतदुक्तं भवति—प्रसङ्ख्याने विरक्तस्तन्निरोधमिच्छन् धर्ममेघं समाधिमुपासीत, तदुपासने च सर्वदा विवेकख्यातिर्भवति, तथा च तन्निरोद्धुं पारयतीति ॥ २९ ॥

तस्य च प्रयोजनमाह—ततः क्लेशकर्मनिवृत्तिः इति सूत्रम्।

कस्मात् पुनर्जीवन्नेव मुक्तो भवति? उत्तरं यस्मात् इति।—क्लेशकर्मवासनाबद्धः किल कर्माशयो जात्यादिनिदानं, न चासति निदाने निदानीभवितुमर्हति, यथा आह स्म भगवानक्षपादः,—वीतरागजन्मादर्शनात् इति ॥ ३० ॥

अथैवं धर्ममेघे सति कीदृशं चित्तम्? इत्यत आह तदा…अल्पम् इति सूत्रम्। आव्रियते चित्तसत्त्वमेभिरित्यावरणानि, मलाः क्लेशकर्माणि, सर्वे च ते आवरणमलाश्चेति सर्वावरणमलाः, तेभ्योऽपेतस्य चित्तसत्त्वस्य ज्ञानस्य ज्ञायते अनेन इत्यनया व्युत्पत्त्या, आनन्त्यात् अपरिमेयत्वात्, ज्ञेयमल्पं, यथा हि शरदि घनपटलमुक्तचन्द्रार्चिषः परितः

सर्वैः क्लेशकर्मावरणैर्विमुक्तस्य ज्ञानस्य आनन्त्यं भवति, आवरकेण तमसा अभिभूतमावृतज्ञानसत्त्वं क्वचिदेव रजसा प्रवर्त्तितमुद्घाटितं ग्रहणसमर्थं भवति, तत्र यदा सर्वैरावरणमलैरपगतमलं भवति तदा भवति तस्य आनन्त्यं, ज्ञानस्य आनन्त्यात् ज्ञेयमल्पं सम्पद्यते, यथा आकाशे खद्योतः, यत्रेदमुक्तं अन्धो मणिमविध्यत् तमनङ्गुलिरावयत्। अग्रीवस्तं प्रत्यमुञ्चत् तमजिह्वोऽभ्यपूजयत् इति ॥ ३१ ॥

## ततः कृतार्थानां परिणामक्रमसमाप्तिर्गुणानाम् ॥ ३२ ॥

तस्य धर्ममेघस्योदयात् कृतार्थानां गुणानां परिणामक्रमः परिसमाप्यते, न कृतभोगापवर्गाः परिसमाप्तक्रमाः क्षणमप्यवस्थातुमुत्सहन्ते ॥ ३२ ॥

---

प्रद्योतमानस्य प्रकाशानन्त्यात् प्रकाश्या घटादयोऽल्पाः प्रकाशन्ते एवमपगतरजस्तमसश्चित्तसत्त्वस्य प्रकाशानन्त्यादल्पं प्रकाश्यमिति. तदेतदाह सर्वैः इति, एतदेव व्यतिरेकमुखेण स्फोरयति आवरकेण तमसाभिभूतम् इति. क्रियाशीलेन रजसा प्रवर्त्तितमत एवोद्घाटितं प्रदेशादपनीततम इत्यर्थः, अत एव सर्वान् धर्मान् ज्ञेयान् मेहति वर्षति प्रकाशनेनेति धर्ममेघ इत्युच्यते। नन्वयमस्तु धर्ममेघः समाधिः सवासनक्लेशकर्माशयप्रशमहेतुः, अथ सत्यस्मिन् कस्मान्न जायते पुनर्जन्तुः? इत्यत आह, यत्रेदमुक्तम् इति।—कारणसमुच्छेदादपि चेत् कार्य्यं क्रियते हन्त भोः! मणिवेधादयोऽन्धादिभ्यो भवेयुः प्रत्ययाः, तथा चानुपपन्नार्थतायामाभाणकी लौकिकः उपपन्नार्थः स्यात्, अविध्य दृब्धी मणिमिति, आवयत् ग्रथितवान्, प्रत्यमुञ्चत् पिनद्धवान्, अभ्यपूजयत् स्तुतवानिति ॥ ३१ ॥

ननु धर्ममेघस्य पराकाष्ठा ज्ञानप्रसादमात्रं परं वैराग्यं समूलघातमपहन्तु व्युत्थानसमाधिसंस्कारान्, क्लेशकर्माशयान्, गुणास्तु स्वत एव विकारकरणशीलाः कस्मात्तादृशमपि पुरुषं प्रति देहेन्द्रियादि नारभन्त इत्यत आह ततः···नाम् इति सूत्रम्। शीलमिदं गुणानां यदमी यं प्रति कृतार्थास्तं प्रति न प्रवर्त्तन्त इति भावः ॥३२॥

अथ कोऽयं क्रमो नामेति ?—

**क्षणप्रतियोगी परिणामाऽपरान्तनिर्ग्राह्यः क्रमः ॥ ३३ ॥**

क्षणानन्तर्य्यात्मा परिणामस्य अपरान्तेन अवसानेन गृह्यते क्रमः, नह्यननुभूतक्रमक्षणा नवस्य पुराणता वस्त्रस्यान्ते भवति, नित्येषु च क्रमो दृष्टः, द्वयी चेयं नित्यता कूटस्थनित्यता परिणामिनित्यता च, तत्र कूटस्थनित्यता पुरुषस्य, परिणामिनित्यता गुणानां, यस्मिन् परिणम्यमाने तत्त्वं न विहन्यते तन्नित्यं, उभयस्य च तत्त्वानभिघातान्नित्यत्वं, तत्र गुणधर्मेषु बुद्ध्यादिषु परिणामापरान्तनिर्ग्राह्यः क्रमो लब्धपर्य्यवसानः, नित्येषु धर्मिषु गुणेषु अलब्धपर्य्यवसानः,

---

अवान्तरे परिणामक्रमं पृच्छति अथ कोऽयम् इति। क्षणः···क्रमः इति सूत्रम्। परिणामक्रमः क्षणप्रतियोगी क्षणः प्रतिसम्बन्धी यस्य स तथोक्तः, क्षणप्रचयाश्रय इत्यर्थः, न जातु क्रमः क्रमवन्तमन्तरेण शक्यो निरूपयितुं, न चैकस्यैव क्षणस्य क्रमः, तस्मात् क्षणप्रचयाश्रयः परिशिष्यते, तदिदमाह क्षणानन्तर्य्यात्मा इति। परिणामक्रमे प्रमाणमाह परिणामस्य इति, नवस्य हि वस्त्रस्य प्रयत्नसंरक्षितस्यापि चिरेण पुराणता दृश्यते सोऽयं परिणामस्यापरान्तः पर्य्यवसानः, तेन हि परिणामस्य क्रमः तत प्रागपि पुराणतायाः सूक्ष्मतमसूक्ष्मतरसूक्ष्मस्थूलस्थूलतरत्वादीनां पौर्वापर्य्यमनुमीयते। एतदेव व्यतिरेकमुखेण दर्शयति न हि इति। अननुभूतः अप्राप्तः क्रमक्षणो यया सा तथोक्ता। नन्वेष क्रमः प्रधानस्य न सम्भवति तस्य नित्यत्वादित्यत आह, नित्येषु च इति।—बहुवचनेन सर्वनित्यव्यापितां क्रमस्य प्रतिजानीते, तत्र नित्यानां प्रकारभेदं दर्शयित्वा नित्यव्यापितां क्रमस्योपपादयति द्वयी इति, ननु कूटस्थं स्वभावादप्रच्युतमस्तु नित्यं, परिणामि सदैव स्वरूपात् च्यवमानं कथं नित्यम् ? इत्यत आह, यस्मिन् इति।—धर्मलक्षणावस्थानामुदयव्ययधर्मत्वं धर्मिणस्तु तत्त्वादविघात एवेति। अथ किं परिणामापरान्तनिर्ग्राह्यता सर्वक्रमस्य, नेत्याह, तत्र गुणधर्मेषु बुद्ध्यादिषु इति।—यतो लब्धपर्य्यवसानः धर्माणां विनाशात्, प्रधानस्य तु परिणामक्रमो न लब्धपर्य्यवसानः। ननु प्रधानस्य धर्मद्वारेण परिणामादस्तु

कूटस्थनित्येषु स्वरूपमात्रप्रतिष्ठेषु मुक्तपुरुषेषु स्वरूपास्तिता क्रमेणैवानुभूयत इति तत्राप्यलब्धपर्य्यवसानः शब्दपृष्ठेनास्तिक्रियामुपादाय कल्पित इति। अथास्य संसारस्य स्थित्या गत्या च गुणेषु वर्त्तमानस्यास्ति क्रमसमाप्तिर्न वेति। अवचनीयमेतत्, कथम्? अस्ति प्रश्न एकान्तवचनीयः सर्वो जातो मरिष्यति, ओं भो इति। अथ सर्वो मृत्वा जनिष्यत इति विभज्य वचनीयमेतत् प्रत्युदितख्यातिः क्षीणतृष्णः कुशलो न जनिष्यत इतरस्तु जनिष्यते। तथा मनुष्यजातिः श्रेयसी न वा श्रेयसीत्येवं परिपृष्टे विभज्यवचनीयः प्रश्नः, पशूनुद्दिश्य श्रेयसी देवानृषींश्चाधिकृत्य नेति। अयन्तु अवचनीयः प्रश्नः

---

परिणामक्रमः पुरुषस्य त्वपरिणामिनः कुत परिणामक्रमः? इत्यत आह, कूटस्थनित्येषु इति।—तत्र बद्धानां चित्ताव्यतिरेकाभिमानात् तत्परिणामाध्यासः, मुक्तानां चास्तिक्रियामुपादायावास्तवोऽपि परिणामो मोहकल्पितः शब्दस्य पुरःसरतया तत्पृष्ठो विकल्पोऽस्तिक्रियामुपादत्त इति। गुणेष्वलब्धपर्य्यवसानः परिणामक्रम इत्युक्तं तदसहमानः पृच्छति अथ इति, स्थित्येति महाप्रलयावस्थायां, गत्येति सृष्टौ। एतदुक्तं भवति यद्यानन्त्यान्न परिणामसमाप्तिः संसारस्य, हन्त भोः! कथं महाप्रलयसमये सर्वेषामात्मनां सहसा समुच्छिद्येत? कथञ्च सृष्टादौ सहसोत्पद्येत संसारः? तस्मात् एकैकस्यात्मनो मुक्तिक्रमेण सर्वेषां विमोक्षादुच्छेदः सर्वेषां संसारक्रमेणेति प्रधानपरिणामपरिसमाप्तिः, एवञ्च प्रधानस्याप्यनित्यत्वप्रसङ्गः. न चापूर्वसत्त्वप्रादुर्भाव इष्यते येनानन्त्यं स्यात्, तथा सति अनादित्वव्याहतेः सकलशास्त्रार्थभङ्गप्रसङ्ग इति भावः। उत्तरमाह अवचनीयम् इति, अनुत्तरार्हमेतत्। एकान्तत एव तस्यावचनीयता दर्शयितुमेकान्तवचनीयं प्रश्नं दर्शयति अस्ति प्रश्न इति, सर्वो जातो मरिष्यतीति प्रश्नः, उत्तरम् ओं भो इति, सत्यं भो इत्यर्थः। अविभज्य वचनीयमुक्त्वा प्रविभज्य वचनीयं प्रश्नमाह अथ सर्व इति, विभज्य वचनीयतामाह विभज्य इति। विभज्य वचनीयमेव प्रश्नान्तरं विस्पष्टार्थमाह तथा मनुष्यजातिः इति, अयन्तु अवचनीय एकान्ततः न हि सामान्येन कुशलाकुशलपुरुषसंसारस्यान्तवत्त्वमनन्तवत्त्वं वा शक्यमेकान्ततो वक्तुं, यथा प्राणभृन्मात्रस्य श्रेयस्त्वमश्रेयस्त्वं वा नैकान्ततः शक्योऽवधारयितुं यथा जातमात्रस्य मरणमेकान्तः।

संसारोऽयमन्तवानथानन्त इति. कुशलस्यास्ति संसारक्रमसमाप्ति-र्नेतरस्येति. अन्यतरावधारणेऽदोषः, तस्मात् व्याकरणीय एवायं प्रश्न इति ॥ ३३ ॥

गुणाधिकारक्रमसमाप्तौ कैवल्यमुक्तं तत् स्वरूपमवधार्य्यते,—

**पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिरिति ॥ ३४ ॥**

कृतभोगापवर्गाणां पुरुषार्थशून्यानां यः प्रतिप्रसवः कार्य्य-कारणात्मनां गुणानां तत् कैवल्यं, स्वरूपप्रतिष्ठा पुनर्बुद्धिसत्त्वा-ऽनभिसम्बन्धात् पुरुषस्य चितिशक्तिरेव केवला, तस्याः सदा तथैवावस्थानं कैवल्यमिति ॥ ३४ ॥

विभज्य पुनः शक्यावधारणमित्याह कुशलस्य इति । —अयमभिसन्धिः क्रमेण मोक्षे सर्वेषां मोक्षात् संसारोच्छेद इत्यनुमानं, तच्चागमसिद्धमोक्षाश्रयं. तथा चाभ्युपगतमोक्षप्रति-पादकागमप्रमाणभावः कथं तमेव आगमं प्रधानविकारनित्यतायामप्रमाणीकूर्य्यात् ? तस्मादागमबाधितविषयमेतदनुमानं न प्रमाणं, श्रूयते हि श्रुतिस्मृतीतिहासपुराणेषु सर्गप्रतिसर्गपरम्परया अनादित्वमनन्तत्वञ्चेति । अपि च सर्वेषामेवात्मनां संसारस्य न तावत् युगपदुच्छेदः सम्भवी, न हि पण्डितरूपाणामप्यनेकजन्मपरम्पराभ्यासपरि-श्रमसाध्या विवेकख्यातिप्रतिष्ठा किं पुनः प्राणभृन्मात्रस्य स्थावरजङ्गमादेरेकदा-ऽकस्मात् भवितुमर्हति ; न च कारणाऽयौगपद्ये कार्य्ययौगपद्यं युज्यते, क्रमेण तु विवेकख्यातावसङ्ख्येयानां क्रमेण मुक्तौ न संसारोच्छेदः, अनन्तत्वात् जन्तूनामसङ्ख्येयत्वा-दिति सर्वमवदातम् ॥ ३३ ॥

कैवल्यस्वरूपावधारणपरस्य सूत्रस्यावान्तरसङ्गतिमाह, गुणाधिकार इति ।—पुरुषार्थ-शून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिः इति सूत्रम् । कृत-करणीयतया पुरुषार्थशून्यानां गुणानां यः प्रतिप्रसवः स्वकारणे प्रधाने लयः, तेषां कार्य्य-कारणात्मकानां गुणानां व्युत्थानसमाधिनिरोधसंस्कारा मनसि लीयन्ते, मनोऽस्मितायाम्, अस्मिता लिङ्गे, लिङ्गमलिङ्गे इति, योऽयं गुणानां कार्य्यकारणात्मनां प्रतिसर्गः तत् कैवल्यं यं कञ्चित् पुरुषं प्रति प्रधानस्य मोक्षः । स्वरूपप्रतिष्ठा पुरुषस्य वा मोक्ष इत्याह, स्वरूपप्रतिष्ठा इति ।—अस्ति हि महाप्रलयेऽपि स्वरूपप्रतिष्ठा चितिशक्तिर्न चासौ मोक्ष इत्यत आह पुनः इति । सोऽव इति शब्दः शास्त्रपरिसमाप्तौ ॥ ३४ ॥

इति श्रीपातञ्जले योगशास्त्रे साङ्ख्यप्रवचने कैवल्यपादश्चतुर्थः ॥ ४ ॥

मुक्त्यर्हचित्तं परलोकमेयञ्च सिद्धयो धर्मघनः समाधिः।
द्वयी च मुक्तिः प्रतिपादितास्मिन् पादे प्रसङ्गादपि चान्यदुक्तम् ॥ १ ॥
निदानं तापानामुदितमथ तापाश्च कथिताः
सहाङ्गैरष्टाभिर्विहितमिह योगद्वयमपि।
कृतो मुक्तेरध्वा गुणपुरुषभेदः स्फुटतरः
विविक्तं कैवल्यं परिगलिततापा चितिरसौ ॥ २ ॥

इति श्रीवाचस्पतिमिश्रविरचितायां पातञ्जलभाष्यव्याख्यायां तत्त्ववैशारद्यां कैवल्यपादश्चतुर्थः ॥ ४ ॥




---






